आकाशइतिलुप्तविभक्तिकं।स्वाद्यंरसः ब्रह्मवेदाःयज्ञाश्च स्थास्नुस्थावरं चरिष्णुजंगमं ७४ अद्भ्यःसमुद्रेभ्यस्तोकावर्षबिंदवः संक्षयेप्रलयेएकार्णवे सायुज्यमैक्यं ७५ रूपंज्योतिरितिनिद्राभ्यांश्लोकाभ्यांसर्वस्य ब्रह्मप्रभवत्वंब्रह्मप्रलयत्वंचोक्तमिदसर्वस्मादन्यद्ब्रह्मणोरूपंविविनक्ति दिव्येति।दिविहार्दाकाशेभवौदिव्यौशुद्धाशुद्धासत्वप्रधानायांमूलप्रकृतौमायाविद्याख्यायांचित्प्रतिबिंबावितियावत् तौचतावावृतौदिव्या वृतावीश्वरजीवौ । अथापिमानसौमनस्येवशास्तृशास्यभावेनाभिव्यक्तौद्वौसुपर्णौपक्षिवदुपाध्यसंगिनौ तयोरधिष्ठेयाःसप्तपिप्पलाअश्वत्थाः वाचाशाखाःवाङ्मात्रेणशाखावत्खेआकाशेशेरतेतेशाखाः शाखाः स्वशयाइतिशाखाः। वाचारंभणंविकारइतिश्रुतेरनृताइत्यर्थः महदहंकारपंचतन्मात्राख्याः प्रकृतीमानसौप्रागुक्तौताभ्यांमहंकादश तथादशेंद्रियाणि तेषामेकादशानांगोप्तारः गोप्तेतिपाठेएकवचनमार्षं तानिहि संसारजाश्वत्थमूलात्वामनावर्धयंति केतेदश येपुरंपांचभौतिकंशरीरंधारयंतितेभ्यश्चषड्विंशतेरन्यःपरमात्मामप्तविंशस्त्वमसीत्यर्थः ७६ भूतमिति। संभूतासंभूतानिविश्वाविश्वानि उभयत्रसुपश्छांदसोऽडादेशः

रूपंज्योतिःशब्दआकाशवायुःस्पर्शःस्वाद्यंसलिलंगंधउर्वी ॥ कालोब्रह्माब्रह्मचब्राह्मणाश्चत्वत्संभूतंस्थास्नुचरिष्णुचेदम् ७४ अभ्द्यःस्तोकायांतियथापृथक्त्वंताभिश्चै क्यंसंक्षयेयांतिभूयः ॥ एवंविद्वान्प्रभवंचाप्ययंचमत्वाभूतानांतवसायुज्यमेति ७५ दिव्यावृतौमानसौद्वौसुपर्णौवाचाशाखाःपिप्पलाःसप्तगोपाः ॥ दशाप्यन्येयेपुरं धारयंतित्वयासृष्टास्त्वंहितेभ्यःपरोहि ७६ भूतंभव्यंभविताचाप्यधृष्यंत्वत्संभूताभुवनानीहविश्वा ॥ भक्तंचमांभजमानंभजस्वमारीरिषोमामहिताहितेन ७७ आत्मा नंत्वामात्मनोनन्यबोधंविद्वानेवंगच्छतिब्रह्मशुक्रम् ॥ अस्तौषंत्वांतवसंमानमिच्छन्विचिन्वन्वैसदृशंदेववर्य ॥ सुदुर्लभान्देहिवरान्ममेष्टानभिष्टुतःप्रविकार्षीश्चमायाम् ७८ ॥ व्यासउवाच ॥ तस्मैवरानचिंत्यात्मानीलकंठःपिनाकधृक् ॥ अर्हतेदेवमुख्यायप्रायच्छदृषिसंस्तुतः ७९ ॥ श्रीभगवानुवाच ॥ मत्प्रसादान्मनुष्येषुदेवगं धर्वयोनिषु ॥ अप्रमेयबलात्मात्वंनारायणभविष्यसि ८० नचत्वांप्रसहिष्यंतिदेवासुरमहोरगाः ॥ नपिशाचानगंधर्वानयक्षानचराक्षसाः ८१ नसुपर्णास्तथानागानच विश्वेवियोनिजाः ॥ नकश्चित्त्वांचदेवोपिसमरेषुविजेष्यति ८२ नशस्त्रेणनवज्रेणनाग्निनानचवायुना ॥ नचार्द्रेणनशुष्केणत्रसेनस्थावरेणच ८३ कश्चित्तवरुजांकर्तामत्प्र सादात्कथंचन ॥ अपिचेत्समरंगत्वाभविष्यसिममाधिकः ८४ एवमेतेवरालब्धाःपुरस्ताद्विद्धिशौरिणा ॥ सएषदेवश्चरतिमाययामोहयन्जगत् ८५ तस्यैवतपसाजा तंनरंनाममहामुनिम् ॥ तुल्यमेतेनदेवेनतंजानीह्यर्जुनंसदा ८६

भजस्वइष्टकामपूरणेनपालय मारीरिषःमाहिंसीर्मा केनअहिताहितेन अहितानांकामादीनामाहितमाधानंमच्चेतसिप्रवेशनंतेनेत्यर्थः ७७ आत्मानमिति। आत्मनोजीवस्यआत्मानंनिरुपाधिस्वरूपंप्रत्यञ्चं अतएवा नन्यबोधंनास्तिअन्योऽहंकारादिर्बोधोयस्मिंस्तमनन्यबोधं। अनन्यभावमितिपाठेऽपिसएवार्थः एतादृशंत्वांविद्वान् शुक्रमुपाध्यसंपर्कान्निरवद्यंब्रह्मगच्छतिप्राप्नोत्युपाधिप्रहाणेन अहंतुअहंकारविशिष्टस्तवशंभोः संमानपर्चनंकर्तुमिच्छंस्त्वामस्तौषंस्तुतवानस्मि कीदृशं मद्दृशंस्तुतियोग्यं त्वांविचिन्वन्नन्वेषयन् स्वदृषमितिपाठेस्वधर्मरूपंस्वधर्मप्राप्यं हेदेववर्यईशस्यापित्वंदुरधिगमइत्यर्थः मायांचप्रविकार्षीःप्रकर्षेणविक्षिपत्वा नसि तांमामुद्दिश्यमाप्रविकार्षीरित्यनुषंगेणान्वयः ७८ अर्हतेयोग्याय ऋषिणानारायणेनसंस्तुतः ७९ । ८० । ८१ वियोनिजाःसिंहव्याघ्रादयः ८२ त्रसेनजंगमेन ८३ गत्वाप्राप्य ८४ । ८५ । ८६ ॥

पूर्वदेवानांब्रह्मविष्णुरुद्राणांमध्येएतौविष्णुरूपिणावृषीनरनारायणौपरमोचितावत्यन्ततपःसंपन्नौ ८७ । ८८ देववन्नारायणवत् अवाकर्षःअवमतंकृशंकृतवानसि आत्मानंशरीरम् ८९ शुभ्रंदीप्तिमत् ९० ९१ तयोर्नरनारायणयोः अथापि तवतयोश्चविशेषहेतुंशृण्वित्याह ताभ्यामिति । लिंगेसूक्ष्मशरीरे अर्चायांप्रतिमायां अयंभावः । 'चतुर्णांसन्निधानेनयत्फलंतदशाश्वतं ॥ द्वयोस्तुसन्निधानेनशाश्वतंप्राप्यतेपदम्' इति दक्षस्मृतेः । प्रतिमायांशिवार्चकस्यआत्ममनइंद्रियविषयाणांचतुर्णांसान्निध्यमस्ति । लिंगेतदर्चकस्यतुआत्ममनसोर्द्वयोरेवसान्निध्यमस्तीतितयोरर्चकत्वसाम्येऽपिप्रकारभेदात्फलभेदभागितेति ९२ लिंगार्चनादेवसर्वंब्रह्मेतिजानातीत्याह सर्वेति । ज्ञात्वाशास्त्रात् पूर्वंज्ञात्वापश्चादनुभवेनापिजानातीत्यर्थः अतएवकृष्णेआत्मयोगाख्यंजीवब्रह्मैक्यविज्ञानं शास्त्रयोगाख्यंपरोक्षज्ञानंचतत्कारणीभूतंपुष्कलमस्ती

तावेतौपूर्वदेवानांपरमोपचितावृषी ॥ लोकयात्राविधानार्थंसंजायेतेयुगेयुगे ८७ तथैवकर्मणाकृत्स्नंमहतस्तपसोऽपिच ॥ तेजोमन्युंचबिभ्रंस्त्वंजातोरौद्रोमहामते ८८ सभवान्देववत्प्राज्ञोज्ञात्वाभवमयंजगत् ॥ अवाकर्षस्त्वमात्मानंनियमैस्तत्प्रियेप्सया ८९ शुभ्रमत्रहविःकृत्वामहापुरुषविग्रहम् ॥ ईजिवांस्त्वंजपैर्होमैरुपहारैश्चमानद ९० सतथापूज्यमानस्तेपूर्वदेहेऽप्यतूतुषत् ॥ पुष्कलांश्चवरान्प्रादात्तवविद्वन्हृदिस्थितान् ९१ जन्मकर्मतपोयोगास्तयोस्तवचपुष्कलाः ॥ ताभ्यांलिंगेऽर्चितोदेवस्त्वयाऽर्चायांयुगेयुगे ९२ सर्वरूपंभवंज्ञात्वालिंगेयोऽर्चयतिप्रभुम् ॥ आत्मयोगाश्चतस्मिन्वैशास्त्रयोगाश्चशाश्वताः ९३ एवंदेवायजंतोहिसिद्धाश्चपरमर्षयः ॥ प्रार्थयंतेपरंलोकेस्थाणुमेकंससर्वकृत् ९४ सएषरुद्रभक्तश्चकेशवोरुद्रसंभवः ॥ कृष्णएवहियष्टव्योयज्ञैश्चैवसनातनः ९५ सर्वभूतभवंज्ञात्वालिंगमर्चतियःप्रभोः ॥ तस्मिन्नभ्यधिकांप्रीतिंकरोतिवृषभध्वजः ९६ ॥ संजयउवाच ॥ तस्यतद्वचनंश्रुत्वाद्रोणपुत्रोमहारथः ॥ नमश्चकाररुद्रायबहुमेनेचकेशवम् ९७ हृष्टरोमाचवश्यात्मासोऽभिवाद्यमहर्षये ॥ वरूथिनीमभिप्रेक्ष्यह्यवहारमकारयत् ९८ ततःप्रत्यवहारोऽभूत्पांडवानांविशांपते ॥ कौरवाणांचदीनानांद्रोणेयुधिनिपातिते ९९ युद्धंकृत्वादिनान्पञ्चद्रोणोहत्वावरूथिनीम् ॥ ब्रह्मलोकंगतोराजन्ब्राह्मणोवेदपारगः १०० ॥ इतिश्रीमहाभारतेद्रोणपर्वणिनारायणास्त्रमोक्षपर्वणिव्यासवाक्येशतरुद्रीयेएकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ तस्मिन्नतिरथेद्रोणेनिहतेपार्षतेनवै ॥ मामकाःपांडवाश्चैवकिमकुर्वन्नतःपरम् १ ॥ संजयउवाच ॥ तस्मिन्नतिरथेद्रोणेनिहतेपार्षतेनवै ॥ कौरवेषुचभग्नेषुकुंतीपुत्रोधनंजयः २ दृष्ट्वासुमहदाश्चर्यमात्मनोविजयावहम् ॥ यदृच्छयागतंव्यासंपप्रच्छभरतर्षभ ३ ॥ अर्जुनउवाच ॥ संग्रामेन्यहनंशत्रून्शरौघैर्विमलैरहम् ॥ अग्रतोलक्षयेयांतंपुरुषंपावकप्रभम् ४ ज्वलंतंशूलमुद्यम्ययांदिशंप्रतिपद्यते ॥ तस्यांदिशिविदिर्यंतेशत्रवोमेमहामुने ५ तेनभग्नानरीन्सर्वान्मद्भग्नान्मन्यतेजनः ॥ तेनभग्नानिसैन्यानिपृष्ठतोऽनुव्रजाम्यहम् ६ ॥ ॥ ॥ ॥ ॥ ॥

त्याह आत्मेति ९३ । ९४ कृष्णःभक्तानांसहेतुकंसंसारंकर्षतीतियोगात्सएवाराध्यः ९५ । ९६ । ९७ । ९८ महर्षयेव्यासाय ९९ । १०० ॥ इति द्रोणपर्वणिटीकायामेकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥



तदेवंविष्णोःशिवमयत्वंव्याख्याय विष्णुत्राणात्तन्मयस्यजगतस्त्राणमपिशैवमेवकर्मेत्युक्तं । तस्मिन्नित्यतआरभ्यपर्वसमाप्तिपर्यंतस्यग्रंथस्यतात्पर्यमपिभूभारावतारहेतुरपिशिवएवेति १ । २ यदृच्छयादैवेन ३ न्यहनंशत्रूनित्यत्र निघ्नतःशत्रूनितिपाठेशरौघैःशत्रून्निघ्नतोमगाग्रतोयांतंपुरुषमहंलक्षयेइत्यन्वयः ४ । ५ । ६ ॥ ॥ ॥

७।८ प्रजानांसर्गस्थित्यंतकर्तृत्वेनपतीनांब्रह्मविष्णुरुद्राणांप्रथमंप्रथयितारंकारणमित्यर्थः। तैजसंस्वार्थेतद्धितः चिन्मात्ररूपं। पुरुषंसर्वपूर्षुशरीरगुहासुशयानं अतएवप्रभुमंतर्यामित्वेनशास्तारं भुवनंद्यौः भूःपृथिवी भुवमंतरिक्षं त्रैलोक्यशरीरमित्यर्थः देवंद्योतमानं सर्वलोकेश्वरं प्रभुमितिराजवद्बहिःस्थित्वाऽपिनियमयंतमित्यर्थः ९ ईशानमनन्याधिपतिं। वरदंश्रेष्ठानामपिखंडयितारं। भुवनेश्वरंभुवनव्यापिनम् १० जटिलं शिखिनमितिरूपभेदाभिप्रायेणविशेषणद्वयंयोज्यम् ११ जगत्प्रीतिजगदानंदकरं। अधीश्वरंईश्वरादप्यधिकंनिरुपाधिचिन्मात्रमित्यर्थः १२ जगद्योनिंजगद्बीजमितिजगतांमातृपितृरूपम् १३ विश्वनरंविश्वस्य

भगवंस्तन्ममाचक्ष्वकोवैसपुरुषोत्तमः ॥ शूलपाणिर्मयादृष्टस्तेजसासूर्यसन्निभः ७ नपद्भ्यांस्पृशतेभूमिंनचशूलंविमुंचति ॥ शूलाच्छूलसहस्राणिनिष्पेतुस्तस्यतेजसा ८ ॥ व्यासउवाच ॥ प्रजापतीनांप्रथमंतैजसंपुरुषंप्रभुम् ॥ भुवनंभूर्भुवंदेवंसर्वलोकेश्वरंप्रभुम् ९ ईशानंवरदंपार्थदृष्टवानसिशंकरम् ॥ तंगच्छशरणंदेवंवरदंभुवनेश्वरम् १० महादेवंमहात्मानमीशानंजटिलंविभुम् ॥ त्र्यक्षंमहाभुजंरुद्रंशिखिनंचीरवाससम् ११ महादेवंहरंस्थाणुंवरदंभुवनेश्वरम् ॥ जगत्प्रधानमजितंजगत्प्रीतिमधीश्वरम् १२ जगद्योनिंजगद्बीजंजयिनंजगतोगतिम् ॥ विश्वात्मानंविश्वसृजंविश्वमूर्तिंयशस्विनम् १३ विश्वेश्वरंविश्वनरंकर्मणामीश्वरंप्रभुम् ॥ शंभुंस्वयंभुंभूतेशंभूतभव्यभवोद्भवम् १४ योगंयोगेश्वरंसर्वंसर्वलोकेश्वरेश्वरम् ॥ सर्वश्रेष्ठंजगच्छ्रेष्ठंवरिष्ठंपरमेष्ठिनम् १५ लोकत्रयविधातारमेकंलोकत्रयाश्रयम् ॥ शुद्धात्मानंभवंभीमंशशांककृतशेखरम् १६ शाश्वतंभूधरंदेवंसर्ववागीश्वरेश्वरम् ॥ सुदुर्जयंजगन्नाथंजन्ममृत्युजरातिगम् १७ ज्ञानात्मानंज्ञानगम्यंज्ञानश्रेष्ठंसुदुर्विदम् ॥ दातारंचैवभक्तानांप्रसादविहितान्वरान् १८ तस्यपारिषदादिव्यारूपैर्नानाविधैर्विभोः ॥ वामनाजटिलामुंडाह्रस्वग्रीवामहोदराः १९ महाकायामहोत्साहामहाकर्णास्तथापरे ॥ आननैर्विकृतैःपादैःपार्थवेषैश्चवैकृतैः २० ईदृशैःसमहादेवःपूज्यमानोमहेश्वरः ॥ सशिवस्तातत्तेजस्वीप्रसादाद्यातितेऽग्रतः २१ तस्मिन्घोरेसदापार्थसंग्रामेलोमहर्षणे ॥ द्रौणिकर्णकृपैर्गुप्तांमहेष्वासैःप्रहारिभिः २२ कस्तांसेनांतदापार्थमनसाऽपिप्रधर्षयेत् ॥ ऋतेदेवान्महेष्वासाद्बहुरूपान्महेश्वरात् २३ स्थातुमुत्सहतेकश्चिन्नतस्मिन्नग्रतःस्थिते ॥ नहिभूतंसमंतेनत्रिषुलोकेषुविद्यते २४ गंधेनापिहिसंग्रामेतस्यक्रुद्धस्यशत्रवः ॥ विसंज्ञाहतभूयिष्ठावेपंतिचपतंतिच २५ तस्मैनमस्तुकुर्वंतोदेवास्तिष्ठंतिवैदिवि ॥ येचान्येमानवालोकेयेचस्वर्गजितोनराः २६ येभक्तावरदंदेवंशिवंरुद्रमुमापतिम् ॥ अनन्यभावेनसदासर्वेशंसमुपासते २७ इहलोकेसुखंप्राप्यतेयांतिपरमांगतिम् ॥ नमस्कुरुष्वकौन्तेयतस्मैशांतायवैसदा २८ रुद्रायशितिकंठायकनिष्ठायसुवर्चसे ॥ कपर्दिनेकरालायहर्यक्षवरदायच २९

नेतारं। भूतस्यभव्यस्यभवस्यवर्तमानस्यचोद्भवम् १४ योगंकर्मयोगादिरूपं। योगेश्वरंयोगिनामीशं योगानांफलप्रदंवा सर्वंसर्वात्मकम् १५। १६ सुदुर्जयमत्यंतंदुष्प्रापमनधिकारिभिः १७ ज्ञानात्मानंज्ञानस्वरूपं ज्ञानगम्यंपरविद्याप्राप्यं। ज्ञानश्रेष्ठंचिन्मात्ररूपत्वेनैवप्रशस्यतमं। अतएवसुदुर्विदमविषयत्वादुर्ज्ञेयं १८ पारिषदागणाः १९। २०। २१। २२ प्रधर्षयेदभिभवेत् २३। २४। २५। २६ भक्ताःभजंतइतिभक्ताः २७ नमस्करणंप्रह्वीभावस्तंकुरुष्व। शितिकंठायनीलग्रीवाय। कनिष्ठायसूक्ष्मायेतिप्राञ्चः। कनीदीप्तौ दीप्ततमाय २८ हर्यक्षःपिंगाक्षःकुबेरः २९ ॥ ॥

याम्याययामकर्त्रेकालाय। अव्यक्तकेशाय अव्यक्तंप्राप्याशबलंकेशवर्द्गीस्मपात्रंयस्य। सद्वृत्तेभक्तेशंकरायसुखकराय ३० मुंडाययजमानमूर्तित्वात्। कृशायतपोनिष्ठत्वात्। उत्तारणायसंसारादितिशेषः। रंहसेवेगवते ३१ सर्वेअयाः शुभावहाविधयःप्रियायस्यतस्मैसर्वायप्रियाय। प्रियवाससेसोमाय वाससःसोमदैवत्यत्वात्। उष्णीषिणेशिरोवेष्टनवते। मीढुषेवृष्टिकर्त्रे ३२ गिरिशायपर्वतशायिने चीरंवल्कलं। हिरण्यबाहवेसुवर्णालंकृतभुजाय ३३। ३४ वृक्षैर्वृश्चनयोग्यैर्देहैरावृतकायायआच्छादितस्वरूपाय। मध्यमायअंतर्यामिणे। स्रुवहस्तायअध्वर्यवे। भार्गवायरामाय ३५ मुंजोवल्कलंतृणतंतवोवातन्मयवाससे ३६। ३७ अव्यग्रमनाकुलम् ३८ कपर्दिनंजटाजूटवंतं। वृषावर्तंवृषाणांश्रेष्ठानांब्रह्मादीनामावर्तयितारं तानपिभ्रामयंतंमाययेत्यर्थः। वृषनाभंसर्वलोकाश्रयत्वेनप्रशस्ततमगर्भं। वृषध्वजंनंदिवाहनं। वृषदर्पंवृषःसमर्थस्त्रैलोक्यसंहारक्षमोदर्पोऽहंकारोयस्यतं। वृषस्यधर्मस्यपतिं। तत्फलप्रदातृत्वेनवृषोधर्मएवपरापररूपोविश्ववपुषःशृंगभूतउच्चतरोयस्यतं। अतएववृषर्षभं वृषाणांफलवर्षिणामिंद्रादीनामृषभंश्रेष्ठम् ३९ वृषोबलीवर्दोकेध्वजेयस्यतंवृषांकं। वृष

याम्यायाव्यक्तकेशायसद्वृत्तेशंकरायच ॥ काम्यायहरिनेत्रायस्थाणवेपुरुषायच ३० हरिकेशायमुंडायकृशायोत्तारणायच ॥ भास्करायसुतीर्थायदेवदेवायरंहसे ३१ बहुरूपायसर्वायप्रियायप्रियवाससे ॥ उष्णीषिणेसुवक्त्रायसहस्राक्षायमीढुषे ३२ गिरिशायप्रशांतायपतयेचीरवाससे ॥ हिरण्यबाहवेराजन्नुग्रायपतयेदिशाम् ३३ पर्जन्यपतयेचैवभूतानांपतयेनमः ॥ वृक्षाणांपतयेचैवगवांचपतयेनमः ३४ वृक्षैरावृतकायायसेनान्येमध्यमायच ॥ स्रुवहस्तायदेवायधन्विनेभार्गवायच ३५ बहुरूपायविश्वस्यपतयेमुंजवाससे ॥ सहस्रशिरसेचैवसहस्रनयनायच ३६ सहस्रबाहवेचैवसहस्रचरणायच ॥ शरणंगच्छकौन्तेयवरदंभुवनेश्वरम् ३७ उमापतिंविरूपाक्षंदक्षयज्ञनिबर्हणम् ॥ प्रजानांपतिमव्यग्रंभूतानांपतिमव्ययम् ३८ कपर्दिनंवृषावर्तंवृषनाभंवृषध्वजम् ॥ वृषदर्पंवृषपतिंवृषशृंगंवृषर्षभम् ३९ वृषांकंवृषभोदारं वृषभंवृषभेक्षणम् ॥ वृषायुधंवृषशरंवृषभूतंवृषेश्वरम् ४० महोदरंमहाकायंद्वीपिचर्मनिवासिनम् ॥ लोकेशंवरदंमुंडंब्रह्मण्यंब्राह्मणप्रियम् ४१ त्रिशूलपाणिंवरदं खड्गचर्मधरंप्रभुम् ॥ पिनाकिनंखड्गधरंलोकानांपतिमीश्वरम् ४२ प्रपद्येशरणंदेवंशरण्यंचीरवाससम् ॥ नमस्तस्मैसुरेशाययस्यवैश्रवणःसखा ४३ सुवाससेनमस्तुभ्यंसुव्रतायसुधन्विने ॥ धनुर्धरायदेवायप्रियधन्वायधन्विने ४४ धन्वंतरायधनुषेधन्वाचार्यायतेनमः ॥ उग्रायुधायदेवायनमःसुरवरायच ४५ नमोऽस्तुबहुरूपायनमोऽस्तुबहुधन्विने ॥ नमोऽस्तुस्थाणवेनित्यंनमस्तस्मैतपस्विने ४६ नमोस्तुत्रिपुरघ्नायभगघ्नायचवैनमः ॥ वनस्पतीनांपतयेनराणांपतयेनमः ४७ मातॄणांपतयेचैवगणानांपतयेनमः ॥ गवांचपतयेनित्यंयज्ञानांपतयेनमः ४८ ॥ ॥ ॥

भोदारंवृषभेषुधर्मेणभासमानेषुउदारंबहुफलप्रदं। अतएववृषभंवृषेणधर्मेणनिमित्तेनभानंसाक्षात्कारोयस्यतं। वृषभंयोगधर्मैकगम्यं। वृषभेक्षणंस्पष्टार्थं। वृषायुधंश्रेष्ठप्रहरणं। वृषोविष्णुःशरोयस्यतंवृषशरं। वृषभूतंधर्मैकवपुषं। वृषस्यदक्षयज्ञस्येश्वरंनियंतारम् ४० महदनेककोटिब्रह्मांडाश्रयभूतमुदरंयस्यतंमहोदरं। महाकायंत्रैलोक्यशरीरं। द्वीपिचर्मनिवासिनंव्याघ्रचर्मणानितरांछादितम् ४१ खड्गधरं खड्गमात्रधरम् ४२। ४३ सुधन्विनेशोभनाधन्विनोधनुर्धराःपार्षदाअस्यसंतितस्मै। स्वयमपिधनुर्धराय। अतएवप्रियधन्वायधनुःप्रियाय। धन्वधनुःभरकत्वेनास्यास्तीतितस्मैबाणाय ४४ धन्वंतरायधनुषिअंतरेमध्येऽस्तीतिधन्वंतरंमौर्वीतद्रूपाय संधिरार्षः। धनुषेधनुःस्वरूपाय। धन्वाचार्यायधनुर्वेदगुरवे ४५। ४६ भगघ्नायभगनेत्रभिदे ४७। ४८ ॥ ॥ ॥

४९ । ५० । ५१ गुहागताःपातालगताअपीत्यर्थः । नसुखमेधंतीत्युक्तंतदेवाह दक्षस्येत्यादिना ५२ । ५३ । ५४ । ५५ । ५६ तमसासंवृतानप्राकाशंतनप्राज्ञायंत ५७ चक्रुर्ऋषयइतिसंबंधः ५८ पूषाणंपूषणम् ५९ नताःलीनाःसंतोनिश्चक्रमुर्यज्ञदेशादपक्रान्ताः देवानांलीनानामपिवधायेतिशेषः ६० तंशरान्मुंचंतमितिशेषः ६१ । ६२ अतिकोपेनअतिक्रांतकोपेनशांतेनेत्यर्थः । ततःप्रभृतिपूर्वभग्नाःसंतोऽद्यापिभी

अपांचपतयेनित्यंदेवानांपतयेनमः ।। पूष्णोदंतविनाशायत्र्यक्षायवरदायच ४९ नीलकंठायपिंगायस्वर्णकेशायवैनमः ।। कर्माणियानिदिव्यानिमहादेवस्यधीमतः ५० तानितेकीर्तयिष्यामियथाप्रज्ञंयथाश्रुतम् ।। नसुरानासुरालोकेनगंधर्वानराक्षसाः ५१ सुखमेधंतिकुपितेतस्मिन्नपिगुहागताः ।। दक्षस्ययजमानस्यविधिवत्संभृतंपुरा ५२ विव्याधकुपितोयज्ञंनिर्दयस्त्वभवत्तदा ।। धनुषाबाणमुत्सृज्यसघोषंविननादच ५३ तेनशर्मकुतःशांतिंलेभिरेस्मसुरास्तदा ।। विद्रुतेसहसायज्ञेकुपितेचमहेश्वरे ५४ तेनज्यातलघोषेणसर्वेलोकाःसमाकुलाः ।। बभूवुर्वशगाःपार्थनिपेतुश्चसुरासुराः ५५ आपश्चुक्षुभिरेसर्वाश्चकंपेचवसुंधरा ।। पर्वताश्चव्यशीर्यंतदिशोनागाश्चमोहिताः ५६ अंधेनतमसालोकानप्राकाशंतसंवृताः ।। जघ्निवान्सहसूर्येणसर्वेषांज्योतिषांप्रभाः ५७ चुक्षुभुर्भयभीताश्चशांतिंचक्रुस्तथैवच ।। ऋषयःसर्वभूतानामात्मनश्चसुखैषिणः ५८ पूषाणमभ्यद्रवतशंकरःप्रहसन्निव ।। पुरोडाशंभक्षयतोदशनान्वैव्यशातयत् ५९ ततोनिश्चक्रमुर्देवावेपमानानताःस्मते ।। पुनश्चसंदधेदीप्तान्देवानांनिशितान्शरान् ६० सधूमान्सस्फुलिंगांश्चविद्युत्तोयदसन्निभान् ।। तंदृष्ट्वातुसुराःसर्वेप्रणिपत्यमहेश्वरम् ६१ रुद्रस्ययज्ञभागंचविशिष्टंतेत्वकल्पयन् ।। भयेनत्रिदशाराजञ्छरणंचप्रपेदिरे ६२ तेनचैवातिकोपेनसयज्ञःसंधितस्तदा ।। भग्नाश्चापिसुराआसन्भीताश्चाद्यापितंप्रति ६३ असुराणांपुराण्यासंस्त्रीणिवीर्यवतांदिवि ।। आयसंराजतंचैवसौवर्णपरमंमहत् ६४ सौवर्णंकमलाक्षस्यतारकाक्षस्यराजतम् ।। तृतीयंतुपुरंतेषांविद्युन्मालिनआयसम् ६५ नशक्तस्तानिमघवान्भेत्तुंसर्वायुधैरपि ।। अथसर्वेसुरारुद्रंजग्मुःशरणमर्दिताः ६६ तेतमूचुर्महात्मानंसर्वेदेवाःसवासवाः ।। ब्रह्मदत्तवराह्येतेघोरास्त्रिपुरवासिनः ६७ पीडयंत्यधिकंलोकंयस्मात्तेवरदर्पिताः ।। त्वदृतेदेवदेवेशनान्यःशक्तःकथंचन ६८ हंतुंदैत्यान्महादेवजहितांस्त्वंसुरद्विषः ।। रुद्ररौद्राभविष्यंतिपशवःसर्वकर्मसु ६९ निपातयिष्यसेचैतानसुरान्भुवनेश्वर ।। सतथोक्तस्तथेत्युक्त्वादेवानांहितकाम्यया ७० गंधमादनविंध्यौचकृत्वावंशध्वजौहरः ।। पृथ्वींससागरवनांरथंकृत्वातुशंकरः ७१ अक्षंकृत्वातुनागेन्द्रंशेषंनामत्रिलोचनः ।। चक्रेकृत्वातुचंद्रार्कौदेवदेवःपिनाकधृक् ७२ अणीकृत्वैलपत्रंचपुष्पदंतंचत्र्यंबकः ।। यूपंकृत्वातुमलयमवनाहंचतक्षकम् ७३ योक्त्रांगानिचसत्वानिकृत्वाशर्वःप्रतापवान् ।। वेदान्कृत्वाऽथचतुरश्चतुरश्वान्महेश्वरः ७४ ॥ ॥ ॥ ॥

ताःसंतीत्यर्थः ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० वंशध्वजौअल्पौध्वजौपार्श्वद्वयस्थौ । महाध्वजस्तुमेरुरितिवक्ष्यते ७१ । ७२ अणीयुगांतबंधनेद्वौनागौ । यूपंयुगं अवनाहंत्रिवेणुयुगबंधनरज्जुम् ७३ योक्त्राणिअंगानिचाकर्षादीनि सत्वानिसरीसृपपर्वतादीनिच ७४ ॥ ॥ ॥ ॥ ॥

उपवेदान् आयुर्वेदधनुर्वेदगांधर्ववेदपाश्चिमाम्नायान् खलीनान् कडीयाळीतिप्रसिद्धान्। गायत्रीसावित्र्यौप्रग्रहंरश्मीन् ७५ । ७६ वाजाभ्यांपक्षाभ्यांपक्षयोरित्यर्थः ७७ विद्युतविद्युतं निश्राणंनिशितम् ७८ । ७९ स्थानंस्थीयतेऽस्मिन्निति योगाद्व्यूहम् ८० स्थाणुरचलः। समेतानिसमसूत्रगतानि ८१ त्रिपर्वणात्रीणिविष्णुवायुवैवस्वताख्यानि शरपक्षपुंखरूपाणिपर्वाणियस्यतेनत्रिशल्येनगार्हपत्यदक्षिणाग्न्याहवनीयरूपाग्नित्रयशल्येन ८२ पुराणीत्यादिसार्धः पूर्वंदक्षयज्ञविध्वंसनमुक्तंतस्यतात्पर्यमीश्वरेऽनर्पितोयज्ञोविध्वंसते । ततश्चयज्ञकर्ताऋत्विजश्चनश्यंतीत्युक्तं तेनेश्वरप्रीत्यर्थंकर्माणिकार्याणीतिदर्शितं । ततस्त्रि

उपवेदान्खलीनांश्चकृत्वालोकत्रयेश्वरः ॥ गायत्रींप्रग्रहंकृत्वासावित्रींचमहेश्वरः ७५ कृत्वोंकारंप्रतोदंचब्रह्माणंचैवसारथिम् ॥ गांडीवंमंदरंकृत्वागुणंकृत्वातुवासुकिम् ७६ विष्णुंशरोत्तमंकृत्वाशल्यमग्निंतथैवच ॥ वायुंकृत्वाऽथवाजाभ्यांपुंखेवैवस्वतंयमम् ७७ विद्युत्कृत्वाऽथनिश्राणंमेरुंकृत्वाचवैध्वजम् ॥ आरुह्यसरथंदिव्यंसर्वदेवमयंशिवः ७८ त्रिपुरस्यवधार्थायस्थाणुःप्रहरतांवरः ॥ असुराणामंतकरःश्रीमानतुलविक्रमः ७९ स्तूयमानःसुरैःपार्थऋषिभिश्चतपोधनैः ॥ स्थानंमाहेश्वरंकृत्वादिव्यमप्रतिमंप्रभुः ८० अतिष्ठत्स्थाणुभूतःससहस्रंपरिवत्सरान् ॥ यदात्रीणिसमेतानिअंतरिक्षेपुराणिच ८१ त्रिपर्वणात्रिशल्येनतदातानिबिभेदसः ॥ पुराणिनचतंशेकुर्दानवाःप्रतिवीक्षितुम् ८२ शरंकालाग्निसंयुक्तंविष्णुसोमसमायुतम् ॥ पुराणिदग्धवंतंतंदेवीयाताप्रवीक्षितुम् ८३ बालमंकगतंकृत्वास्वयंपंचशिखंपुनः ॥ उमाजिज्ञासमानावैकोऽयमित्यब्रवीत्सुरान् ८४ असूयतश्चशक्रस्यवज्रेणप्रहरिष्यतः ॥ बाहुंसवज्रंतंतस्यक्रुद्धस्यास्तम्भयत्प्रभुः ८५ प्रहस्यभगवांस्तूर्णंसर्वलोकेश्वरोविभुः ॥ ततःसस्तंभितभुजःशक्रोदेवगणैर्वृतः ८६ जगामससुरस्तूर्णंब्रह्माणंप्रभुमव्ययम् ॥ तेतंप्रणम्यशिरसाप्रोचुःप्रांजलयस्तदा ८७ किमप्यंकगतंब्रह्मपार्वत्याभूतमद्भुतम् ॥ बालरूपधरंदृष्ट्वानास्माभिरभिलक्षितः ८८ तस्मात्त्वांप्रष्टुमिच्छामोनिर्जितायेनवैवयम् ॥ अयुध्यताहिबालेनलीलयासपुरंदराः ८९ तेषांतद्वचनंश्रुत्वाब्रह्माब्रह्मविदांवरः ॥ ध्यात्वासशंभुंभगवान्बालंचामिततेजसम् ९० उवाचभगवान्ब्रह्माशक्रादींश्चसुरोत्तमान् ॥ चराचरस्यजगतःप्रभुःसभगवान्हरः ९१ तस्मात्परतरंनान्यत्किंचिदस्तिमहेश्वरात् ॥ योदृष्टोह्युमयासार्धंयुष्माभिरमितद्युतिः ९२ सपार्वत्याःकृतेशर्वःकृतवान्बालरूपताम् ॥ तेमयासहितायूयंप्रापयध्वंतमेवहि ९३ सएषभगवान्देवःसर्वलोकेश्वरःप्रभुः ॥ नसंबुबुधिरेचैनंदेवास्तंभुवनेश्वरम् ९४ सप्रजापतयःसर्वेबालार्कसदृशप्रभम् ॥ अथाभ्येत्यततोब्रह्मादृष्ट्वासचमहेश्वरम् ९५

पुरवधउक्तस्तस्यतात्पर्यंस्थूलसूक्ष्मकारणानित्रीणिशरीराणिपुराणिक्रमाद्बहुनीत्यल्पसुखकरत्वाभ्यांमोहमयत्वेनचसौवर्णराजतायसानि । कामादयोऽसुराः शमादयोदेवास्तेषांप्रीतिकरोरुद्रआत्मा शरीरंपृथिव्याख्यंरथमास्थाय तस्यचालकेचंद्रसूर्याख्येमनश्चक्षुषीचक्रे । वेदाश्चगम्यस्थानप्रापकत्वेनहयाः। शरोविष्ण्वधिष्ठितासूक्ष्मबुद्धिस्तदैकाग्र्येणशरीरत्रयभेदेतुर्येब्रह्मणिसाक्षात्कृतेसतिकामादयोनश्यंति फलभूताश्चशमादयोवर्धंते । तेषुचवर्धमानेषुरुद्रोबालवद्रागद्वेषशून्योब्रह्मविद्यापरनाम्न्याउमायावशगोभवतीत्येतदत्रप्रदर्श्यते ८३ । ८४ असूयतश्चशक्रस्येत्यादितात्पर्यंब्रह्मभूतंद्विषंतःकर्मठास्तेनयोगमहिम्नानिर्जिताःसंतस्तमेवशरणंगच्छंतीति ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ ॥ ॥ ॥

गर्तः पालकः। परायणंलयस्थानम् १.६ भवउत्पत्तिकारणं १.७ ईशःशिक्षकः। नाथोनायकः। पतिःपालकः १.८ । १.९ । १.० । १. सर्वैरुद्रइत्यादिनापुनरेवसार्वात्म्यमुच्यते २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ द्वेतनूइत्युक्तेतनूपुनर्व्याख्याति तस्यदेवस्येति वडवामुखाख्याघोरातनुः १.६ एषचैवेति अघोराश्मशानाख्याकाशी । 'यातेरुद्रशिवातनूरघोराऽपापकाशिनी' इति लिंगादपापस्यब्रह्मणःप्रकाशकत्वात् । एतच्चान्यत्राप्यविमुक्ताख्यांतामेवप्रकृत्याम्नातं अत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवति । तस्मादविमुक्तमेवनिषेवेताविमुक्तंनविमुंचेदिति । तत्रश्मशानेकाश्यांएनंरुद्रंजनाउपासकायजंतिआराधयंति । एतदपितत्रैवश्रुतं । यएषोऽनंतोऽव्यक्तआत्मासोऽविमुक्तउपास्यःसोऽविमुक्तेप्रतिष्ठितइति । वीरस्थानेवीराणांषड्वर्गजयिनांसंन्यासि

अयंश्रेष्ठइतिज्ञात्वाववंदेतंपितामहः ॥ ब्रह्मोवाच ॥ त्वंयज्ञोभुवनस्यास्यत्वंगतिस्त्वंपरायणम् ९६ त्वंभवस्त्वंमहादेवस्त्वंधामपरमंपदम् ॥ त्वयासर्वमिदंव्याप्तंजगत्स्थावरजंगमम् ९७ भगवन्भूतभव्येशलोकनाथजगत्पते ॥ प्रसादंकुरुशक्रस्यत्वयाक्रोधार्दितस्यवै ९८ ॥ व्यासउवाच ॥ पद्मयोनिवचःश्रुत्वाततःप्रीतोमहेश्वरः ॥ प्रसादाभिमुखोभूत्वाअट्टहासमथाकरोत् ९९ ततःप्रसादयामासुरुमांरुद्रंचतेसुराः ॥ अभवच्चपुनर्बाहुर्यथाप्रकृतिवज्रिणः १०० तेषांप्रसन्नोभगवान्सपत्नीकोवृषध्वजः ॥ देवानांत्रिदशश्रेष्ठोदक्षयज्ञविनाशनः १ सवैरुद्रःसचशिवःसोऽग्निःसर्वश्चसर्ववित् ॥ सचेंद्रश्चैववायुश्चसोऽश्विनौचसविद्युतः २ सभवःसचपर्जन्योमहादेवःसनातनः ॥ सचंद्रमाःसचेशानःससूर्योवरुणश्चसः ३ सकालःसोऽन्तकोमृत्युःसयमोराञ्यहानितु ॥ मासार्धमासाऋतवःसंध्येसंवत्सरश्चसः ४ धाताचसविधाताचविश्वात्माविश्वकर्मकृत् ॥ सर्वासांदेवतानांचधारयत्यवपुर्वपुः ५ सर्वदेवैःस्तुतोदेवःसैकधाबहुधाचसः ॥ शतधासहस्रधाचैवभूयःशतसहस्रधा ६ द्वेतनूतस्यदेवस्यवेदज्ञाब्राह्मणाविदुः ॥ घोराचान्याशिवाचान्यातेतनूबहुधापुनः ७ घोरातुयातुधानस्यसोऽग्निर्विष्णुःसभास्करः ॥ सौम्यातुपुनरेवास्यआपोज्योतींषिचंद्रमाः ८ वेदाःसांगोपनिषदःपुराणाध्यात्मनिश्चयाः ॥ यदत्रपरमंगुह्यंसवैदेवोमहेश्वरः ९ ईदृशश्चमहादेवोभूयांश्चभगवानजः ॥ नहिसर्वेमयाशक्यावक्तुंभगवतोगुणाः ११० अपिवर्षसहस्रेणसततंपांडुनंदन ॥ सर्वैर्ग्रहैर्गृहीतान्वैसर्वपापसमन्वितान् ११ समोचयतिसुप्रीतःशरण्यःशरणागतान् ॥ आयुरारोग्यमैश्वर्यंवित्तंकामांश्चपुष्कलान् १२ सददातिमनुष्येभ्यःसचैवाक्षिपतेपुनः ॥ सेंद्रादिषुचदेवेषुतस्यचैश्वर्यमुच्यते १३ सचैवव्याप्ततोलोकेमनुष्याणांशुभाशुभे ॥ ऐश्वर्याच्चैवकामानामीश्वरश्चसउच्यते १४ महेश्वरश्चमहतांभूतानामीश्वरश्चसः ॥ बहुभिर्बहुधारूपैर्विश्वंव्याप्नोतिवैजगत् १५ तस्यदेवस्ययद्वक्त्रंसमुद्रेतदधिष्ठितम् ॥ वडवामुखेतिविख्यातंपिबत्तोयमयंहविः १६ एषचैवश्मशानेषुदेवोवसतिनित्यशः ॥ यजंत्येनंजनास्तत्रवीरस्थानइतीश्वरम् ११७

नांस्थानेअविमुक्ते । यथोक्तंयतीन्प्रकृत्यस्मृतिषु । 'अष्टौमासान्विहारःस्याद्वार्षिकांश्चतुरोवसेत् । अविमुक्तेप्रविष्टानांविहारोनैवविद्यते' इति । नचात्रश्मशानशब्दार्थोलोकप्रसिद्धोग्रहीतुंयुक्तः तस्याशुचित्वेनयागभूमित्वासंभवेनयजंत्येनंजनास्तत्रेतिवाक्यशेषविरोधात् । नचवीरस्थानेइत्युक्तेरक्षुराणांनिधमार्गजुषांतदपियजनस्थानमितिवाच्यं आनुशासनिकेउमामहेश्वरसंवादेश्मशानसदृशंपवित्रंस्थानंत्रैलोक्येनास्तीतिमहेश्वरवचसैवस्थापितत्वात् । तस्मान्महाश्मशानमितिलोकप्रसिद्धेः पवित्रंदेवयजनस्थानंश्मशानाख्यंवाराणस्येव । अत्रैवसंवर्तादीनामज्ञातवासोजाबालादौश्रूयमाणोदानधर्मेषुमैत्रेयभिक्षायामाश्वमेधिकेसंवर्तमरु

र्तीर्थेष्योपबृंहितइतिसर्वमनवद्यम् १७ अस्येति । चादघोराणि १८ निरुच्यंते 'ऐश्वर्याच्चैवकामानामीश्वरश्चसउच्यते ॥ महेश्वरश्चमहतांभूतानामीश्वरश्चसः' इत्येवंजातीयकैःश्लोकैर्व्याख्यायंते १९ शतरुद्रियं 'नमस्तेरुद्रमन्यवे' इतियाजुषःप्रपाठकः । उपस्थानंरुद्रोपस्थानमंत्रभूतम् १२० कामानांदिव्यानांमानुषाणांचसप्रभुर्दाता । विभुर्व्यापकः । विश्वंव्याप्नोतिकनककुंडलवत्नत्वाकाशवद्विभुगात्रंनापिप्रधानवत् २१ यतःप्रभुरीश्वरश्चेतनइतियावत् । ज्येष्ठंप्रशस्ततमंत्रिविधपरिच्छेदशून्यं भूतंनित्यसिद्धं । एषएवप्रथमःप्रजापतिः २२ पशून्जीवान्अत्रपातिपालयति पिबतिसादरंपश्यति शोषयतिचेत्यर्थानभिप्रेसइत्यंतस्यपातेः पतिशब्दउत्पन्नस्तेनपशुपतिशब्दस्याप्यर्थत्रयमिसप्रेविज्ञेयम् २३ ब्रह्मचर्येणदिव्यत्वात्यथास्थितत्वाच्चलिंगमित्यप्यस्यनाम । आलिंगत्ययंप्रपंचंसत्तास्फूर्तिप्रदानेनालिंगत्येनंप्रपंचः प्रलीयमानइतिहेतोरयंलिंग पदवाच्यः दिव्यत्वादसंगत्वाद्यथास्थितत्वात्कूटस्थत्वाच्चप्रधानादन्यत्वमित्यर्थः । महयन्पूजयन्सचासौईश्वरश्चेतिमहेश्वरः २४ लिंगयतिसर्वान्कामान्गमयतिअतःसर्वोत्कृष्टत्वादूर्ध्वंऊर्ध्वत्वाच्चऋष्यादीनामर्च्यं

अस्यदीप्तानिरूपाणिघोराणिचबहूनिच ॥ लोकेयान्यस्यपूज्यंतेमनुष्याःप्रवदंतिच ११८ नामधेयानिलोकेषुबहून्यस्ययथार्थवत् ॥ निरुच्यंतेमहत्त्वाच्चविभुत्वा त्कर्मणस्तथा १९ वेदेचास्यसमाम्नातंशतरुद्रियमुत्तमम् ॥ नाम्नाचानंतरुद्रेतिह्युपस्थानंमहात्मनः २० सकामानांप्रभुर्देवोयेदिव्यायेचमानुषाः ॥ सविभुःसप्रभुर्दे वोविश्वंव्याप्नोतिवैमहत् २१ ज्येष्ठंभूतंवदंत्येनंब्राह्मणामुनयस्तथा ॥ प्रथमोह्येषदेवानांमुखादस्यानलोऽभवत् २२ सर्वथायत्पशून्पातितैश्चयद्रमतेपुनः ॥ तेषामधि पतिर्यच्चतस्मात्पशुपतिःस्मृतः २३ दिव्यंचब्रह्मचर्येणलिंगमस्ययथास्थितम् ॥ महयत्येषलोकांश्चमहेश्वरइतिस्मृतः २४ ऋषयश्चैवदेवाश्चगंधर्वाप्सरसस्तथा ॥ लिंगमस्यार्चयंतिस्मतच्चाप्यूर्ध्वंसमास्थितम् २५ पूज्यमानेततस्तस्मिन्मोदतेसमहेश्वरः ॥ सुखीप्रीतश्चभवतिप्रहृष्टश्चैवशंकरः २६ यदस्यबहुधारूपंभूतभव्यभ वस्थितम् ॥ स्थावरंजंगमंचैवबहुरूपस्ततःस्मृत' २७ एकाक्षोजाज्वलन्नास्तेसर्वतोक्षिमयोऽपिवा ॥ क्रोधाद्यश्चाविशल्लोकांस्तस्मात्सर्वइतिस्मृतः २८ धूम्ररूपं चयत्तस्यधूर्जटिस्तेनचोच्यते ॥ विश्वेदेवाश्चयत्तस्मिन्विश्वरूपस्ततःस्मृतः २९ तिस्रोदेवीर्यदाचैवभजतेभुवनेश्वरः ॥ द्यामपःपृथिवींचैवत्र्यंबकश्चततःस्मृतः १३० समेधयतियन्नित्यंसर्वार्थान्सर्वकर्मसु ॥ शिवमिच्छन्मनुष्याणांतस्मादेषशिवःस्मृतः १३१ ॥ ॥ ॥

लिंगतिभक्तसमर्पितंपत्रपुष्पादिगच्छतिप्राप्नोतीत्यनेनहेतुनालिंगमित्युत्तरस्यार्थः २५ । २६ भव्यंवर्तमानम् २७ एकमक्ष्यस्यवन्हिमयंजाज्वलदस्यंतंदीप्तमास्ते यत्रप्रविष्टंसर्वंतत्तादात्म्यंप्राप्नोतीत्यनेनसरंदेनं भूतानीतिवासरत्ययंसर्वाणिभूतान्यनंतलोचनत्वादितिवासर्वः । जाज्वलन्नित्यस्यैवविवरणंक्रोधादिति । शर्वइतिनालव्यादिपाठेऽपिशृणोतिहिनस्तीतिशर्वइतिनिर्वचनम् २८ धूम्राक्रोधवतीजटाःस्वरूपमस्येतिवि ग्रहेवर्णलोपाद्धूर्जटिरित्याह धूम्रेति रूपशब्दोदेववाचीत्यभिप्रेत्याह विश्वेइति २९ त्रैलोक्यंभजतेपालयतीतित्र्यंबकइत्याह तिस्रइति ३० समेधयतीति यस्माद्धनादिवर्धनेनलोकानांशिवंकरस्तस्माच्छिवइत्यर्थः १३१

महांतिपुरुषभेदेनबहुत्वाद्विभुत्वाद्वाव्यापकाख्यानिदेवशद्धितानींद्रियाण्यस्येतिवा महतोविश्वस्यदेवोराजावामहादेवइत्यभिप्रेत्याह सहस्रेति १३२ सईक्षांचक्रेसप्राणमसृजत्प्राणाच्छ्रद्धामित्यादिनाश्रुतौईक्षणकर्ताईश्वरोमहानुक्तः प्राणोजीवोपाधिस्तेनजीवउक्तः श्रद्धादिकंजीवस्यालिंगशरीरंचरमंकार्यं तत्रमहतईशात्प्रागुपाध्यस्पृष्टेनरूपेणततउपहितेनसाक्षिरूपेणतदुपाध्यभिमानिनाकर्त्रादिरूपेणचास्थितोऽपिस्थितलिंगःअविक्रियस्वरूपतयातिष्ठतीतियोगात्स्थाणुरित्युच्यतइत्याह महदिति ३३ सूर्याचंद्रमसोरित्यग्नेरप्युपलक्षणं रुचोदीप्तयः त्र्यक्षेसूर्यचंद्राग्निनेत्रे व्योम्निकेशारश्मयोयस्येतिविग्रहः ३४ । ३५ । ३६ ३७ । ३८ शरीरेषुविषमैर्दशविधैरूपैस्तिष्ठतीतिविषमस्थः प्राणिनांदेहाभिमानिनांसर्वेषांसमःप्रियत्वात नह्यात्मनिकदाचिदप्यप्रियत्वंकस्यापिदृष्टंसएषशिवएव वायुरूपीप्राणापानादिभेदेनविषमस्थेषुपुण्यपापिषुशरीरिषुजीवेषुस्थितःसर्वसमइत्यर्थः ३९ विग्रहंप्रतिमाम् ४० ऊरुभ्यामित्यादिश्लोकत्रयेणपुनस्तनूद्वयंविभजते ऊरुभ्यामिति । तत्राद्यश्लोकेऽग्निरितिभोक्ता सोमइतिचभोग्यमुच्यते अत्रमुखबाहूरुपादेभ्यो

सहस्राक्षोऽयुताक्षोवासर्वतोक्षिमयोऽपिवा ॥ यच्चविश्वंमहत्पातिमहादेवस्ततःस्मृतः १३२ महत्पूर्वंस्थितोयच्चप्राणोत्पत्तिस्थितश्चयत् ॥ स्थितालिंगश्चयन्नित्यंतस्मात्स्थाणुरितिस्मृतः ३३ सूर्याचंद्रमसोर्लोकेप्रकाशंतेरुचश्चयाः ॥ ताःकेशसंज्ञितास्त्र्यक्षव्योमकेशस्ततःस्मृतः ३४ भूतंभव्यंभविष्यंचसर्वंजगदशेषतः ॥ भवएवततोयस्माद्भूतभव्यभवोद्भवः ३५ कपिःश्रेष्ठइतिप्रोक्तोधर्मश्चवृषउच्यते ॥ सदेवदेवोभगवान्कीर्त्यतेऽतोवृषाकपिः ३६ ब्रह्माणमिंद्रंवरुणंयमंधनदमेवच ॥ निगृह्यहरतेयस्मात्तस्माद्धरइतिस्मृतः ३७ निमीलिताभ्यांनेत्राभ्यांबलाद्देवोमहेश्वरः ॥ ललाटेनेत्रमसृजत्तेनत्र्यक्षःसउच्यते ३८ विषमस्थःशरीरेषुसमश्चप्राणिनामिह ॥ सवायुर्विषमस्थेषुप्राणोऽपानःशरीरिषु ३९ पूजयेद्विग्रहंयस्तुलिंगंचापिमहात्मनः ॥ लिंगंपूजयितानित्यंमहतींश्रियमश्नुते १४० ऊरुभ्यामर्धमाग्नेयंसोमाऽर्धंचशिवातनुः ॥ आत्मनोऽर्धंतथाचाग्निःसोमोऽर्धंपुनरुच्यते ४१ तैजसीमहतीदीप्तादेवेभ्योऽस्यशिवातनुः ॥ भास्वतीमानुषेष्वस्यतनुर्घोराऽग्निरुच्यते ४२ ब्रह्मचर्यंचरत्येषशिवायाऽस्यतनुस्तया ॥ याऽस्यघोरतरामूर्तिःसर्वानत्तितयेश्वरः १४३ ॥ ॥ ॥ ॥

जाताश्चत्वारोवर्णाःकर्मफलभूतवृष्ट्यादिद्वारेणसमस्तप्राणिकल्याणकरत्वाद्रुद्रस्यशिवातनुरित्युच्यते तत्रऊरुशब्देनतदारभ्याधस्तनःप्रदेशउच्यते तत्रार्धमाग्नेयंपरिशेषादर्धंसोमः वैश्योभोक्ताशूद्रोभोज्यइत्यर्थः आत्मनोरुद्रस्य तथाचऊरुभ्यामुपर्यर्धंशिरोभागोब्राह्मणोग्निर्भोक्ता परिशेषादर्धंबाहुभागःक्षत्रियःसोमोभोज्यं तथापुनरप्येतदुच्यते अर्धमाग्नेयमर्धंसोमइति तेनब्रह्मक्षत्रंभोक्तारौ वैश्यशूद्रौभोज्यौ तथाचभोक्त्राभोज्यंरक्ष्यंभोज्येनचभोक्तावर्धनीयइति तथाचचातुर्वर्ण्यंत्रैलोक्यस्थितिहेतुत्वादात्मनोरुद्रस्यशिवातनुरित्यर्थः ४१ तैजसीति । 'नहवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंति' इतिश्रुतेर्देवानांभोग्यासोमरूपाऽस्यशिवातनुःस्वर्गेऽस्ति तथाभुविमानुषेषुघोराभोक्त्रीजठराग्निरूपासर्वानर्थनिदानभूताऽस्तीतिभावः ४२ ब्रह्मचर्यमिति । एषमानुषस्तयातन्वाब्रह्मचर्यंचरति याऽस्यशिवातनुर्दैवीसंपत्शमदमादिरूपा सर्वानर्थनिदानंघोरतराकामक्रोधादिरूपायाऽस्यशिवस्यमूर्तिस्तयाससर्वानत्ति क्रोधाद्याविष्टोहिपित्रादीनपिहिनस्तीतिप्रसिद्धम् १४३ ॥ ॥ ॥

एवमस्यैवकार्यायहृत्त्वादयमेवाराध्योऽस्माद्भेतव्यमित्याशयेनाह यन्निर्दहतीति । निर्दहत्यग्निवत् तीक्ष्णःशस्त्रवत् उग्रोयमवत् प्रतापवान्कालवत्प्रभूत्वासर्वान्रोदयतिरुणद्धिवासर्वप्रास्तित्वाद्रुद्रइत्युच्यते अयमेव भयकृद्भयनाशनश्चेत्याराधनीयोनतुहेलनीयइतिभावः ४४ । ४५ । ४६ । ४७ । ४८ । ४९ चतुर्विधंशुद्धशबलसूत्रविराड्भेदेन भगवद्रूपस्यचातुर्विध्यात्स्तोत्रमप्यस्यचतुर्विधम् ५० । ५१ । ५२ । ५३



यन्निर्दहतियत्तीक्ष्णोयदुग्रोयत्प्रतापवान् ॥ मांसशोणितमज्जादोयत्ततोरुद्रउच्यते १४४ एषदेवोमहादेवोयोऽसौपार्थतवाग्रतः ॥ संग्रामेशात्रवान्निघ्नंस्त्वयादृष्टः पिनाकधृक् ४५ सिंधुराजवधार्थायप्रतिज्ञातेत्वयाऽनघ ॥ कृष्णेनदर्शितःस्वप्नेयस्तुशैलेंद्रमूर्धनि ४६ एषवैभगवान्देवःसंग्रामेयातितेऽग्रतः ॥ येनदत्तानितेस्त्राणि यैस्त्वयादानवाहताः ४७ धन्यंयशस्यमायुष्यंपुण्यंवेदैश्वसंमितम् ॥ देवदेवस्यतेपार्थव्याख्यातंशतरुद्रियम् ४८ सर्वार्थसाधनंपुण्यंसर्वकिल्बिषनाशनम् ॥ सर्वपापप्रशमनंसर्वदुःखभयापहम् ४९ चतुर्विधमिदंस्तोत्रंयःशृणोतिनरःसदा ॥ विजित्यशत्रून्सर्वान्सरुद्रलोकेमहीयते १५० चरितंमहात्मनोनित्यंसांग्रामिकमिदंस्मृतम् ॥ पठन्वैशतरुद्रीयंशृण्वंश्चसततोत्थितः ५१ भक्तोविश्वेश्वरंदेवंमानुषेषुचयःसदा ॥ वरान्कामान्सलभतेप्रसन्नेत्र्यंबकेनरः ५२ गच्छयुद्ध्यस्वकौन्तेयनतवास्तिपराजयः ॥ यस्यमंत्रीचगोप्ताचपार्श्वस्थोहिजनार्दनः ५३ ॥ संजयउवाच ॥ एवमुक्त्वार्जुनंसंख्येपराशरसुतस्तदा ॥ जगामभरतश्रेष्ठयथागतमरिंदम ५४ युद्धंकृत्वामहद्घोरंपंचाहानिमहाबलः ॥ ब्राह्मणोनिहतोराजन्ब्रह्मलोकमवाप्तवान् ५५ स्वधीतेयत्फलंवेदेतदस्मिन्नपिपर्वणि ॥ क्षत्रियाणामभीरूणांयुक्तमत्रमहद्यशः ५६ यइदंपठतेपर्वशृणुयाद्वाऽपिनित्यशः ॥ समुच्यतेमहापापैःकृतैर्घोरैश्चकर्मभिः ५७ यज्ञावाप्तिर्ब्राह्मणस्येहनित्यंघोरेयुद्धेक्षत्रियाणांयशश्च ॥ शेषौवर्णौकाममिष्टंलभेतेपुत्रान्पौत्रान्नित्यमिष्टांस्तथैव १५८ ॥ इतिश्रीमहाभारतेशतसाहस्त्र्यांसंहितायांवैयासिक्यांद्रोणपर्वणिनारायणास्त्रमोक्षपर्वणिद्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ समाप्तंनारायणास्त्रमोक्षपर्व ॥ ॥ द्रोणपर्वसमाप्तम् ॥ अस्यानंतरंकर्णपर्वभविष्यति तस्यायमाद्यःश्लोकः ॥ ॥ वैशंपायनउवाच ॥ ततोद्रोणेहतेराजन्दुर्योधनमुखान्नृपाः ॥ भृशमुद्विग्नमनसोद्रोणपुत्रमुपाद्रवन् १ ॥ ॥ ॥ ॥

५४ । ५५ । ५६ । ५७ । १५८ ॥ ॥ इति द्रोणपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ ॥

अत्र पर्वणि आदिपर्वोक्ताध्यायश्लोकसंख्यातो न्यूनाधिक्यं लेखकादिप्रमादादेव बोध्यम् ॥ ॥

# ॥ महाभारतम् ॥

## कर्णपर्व ।

### —८—

### विषयानुक्रमणिका ।

र्जुनस्तदादीनां धनुरादीनि चिच्छेद। सात्यर्कि हित्वाऽर्जुनं प्रतिगच्छन्तं कर्णं प्रति सात्यकिप्रभृतिषु बाणान्वर्षत्सु तान्निवार्य पाण्डवीं सेनां नाशयति स्म कर्णः। अर्जुनास्त्रप्रतापेन मोहितेषु कौरवसैन्येष्वपयातेषु पाण्डवाः स्वशिबिरं जग्मुः। अत्र षोडशदिवसयुद्धं समाप्तम् ... २३

३१ धृतराष्ट्रोऽर्जुनं प्रशस्य दुर्योधनः किमकरोदिति पप्रच्छ, सञ्जयश्च तद्वक्तुमुपचक्रमे-शिबिरं गत्वा कौरवेषु विचारयत्सु 'श्वोऽर्जुनसङ्कल्पं हन्ता' इति कर्णस्य सक्रोधं वाक्यं श्रुत्वा दुर्योधनेनानुज्ञाताः सर्वे योधाः स्वस्वभवनानि गत्वा प्रातर्युद्धाय निर्जग्मुः। कर्णयुद्धविषये प्रश्नं कृत्वा दुर्योधनं निन्दन्तं धृतराष्ट्रं प्रति तन्निन्दारूपं सञ्जयवाक्यम्। कर्णोऽर्जुनवधप्रतिज्ञापूर्वकमात्मानं श्लाघयञ्शल्यं सारथ्यकर्मणि नियोक्तुं दुर्योधनं प्रति प्रार्थयित्वाऽऽत्मानं शल्यं च प्रशशंस। कर्णवाक्यं श्रुत्वा हृष्टो दुर्योधनस्तंदुक्तमङ्गीचकार ... ... ... ... २४

३२ दुर्योधनः शल्यसमीपं गत्वा सविनयं कर्णस्य सारथ्यं भवान्करोत्वित्याह। दुर्योधनवाक्येन क्रुद्धः शल्य आत्मानं श्लाघयन् 'कथं युनक्षि सारथ्ये' इत्याद्युक्त्वा सभाया निर्जगाम, क्रोधात्सभाया निर्गच्छन्दुर्योधनेन गृहीतः शल्यो विनयपूर्विकां 'भवानधिकः कृष्णात्' इत्यादिकां तद्वाणीं श्रुत्वा हृष्टः सन् कर्णसारथ्यं स्वीकृत्य स्वसमयमाह, दुर्योधनश्च तदङ्गीचका २५

३३ पुनर्दुर्योधनो 'यथा पुरा वृत्तमिदम्' इत्याद्युक्त्वा त्रिपुरवधाख्यानं कथयति स्म। युद्धे निर्जितास्तारकासुरपुत्रास्तारकाक्ष-कमलाक्ष-विद्युन्मालिनामानोऽवध्यत्वसम्पादनार्थं तपश्चेरुः। तपसा तुष्टेन ब्रह्मणा तैः प्रार्थितमवध्यत्वमनङ्गीकृत्य वरान्तरं याचध्वमित्युक्तास्ते त्रीणि पुराण्ययाचन्त, येषु, स्थित्वा महीं विचरिष्याम इत्याद्याहुश्च। ब्रह्मणा तथेत्यङ्गीकृते प्रार्थितेन मयेन निर्मितानि काञ्चन-रौप्य-कार्ष्णायसमयानि त्रीणि पुराण्यवाप्य तारकाक्षपुत्रेण हरिणा तपसा ब्रह्मणः सम्पादिताममृतवापीं च प्रापुः। पुराण्यास्थाय लोकान्बाधमानेषु तेषु तन्नाशोपायजिज्ञासवो देवा ब्रह्मसमीपं प्राप्य तेन सह महादेवं प्रति गत्वा स्तुत्या तं प्रसादयामासुः ... ... ... ... २६

३४ प्रसन्नेन महादेवेनाभये दत्ते ब्रह्मा त्रिपुरवधं प्रार्थयामास। महादेवेन मत्तेजोऽर्धं गृहीत्वा यूयमेवैकमत्येन तान्हतेत्यादिष्टैर्देवैस्तदनङ्गीकृत्यास्मत्तेजोर्धसहाय्येन भवानेवैतान्हन्त्विति प्रार्थितः स तदङ्गीचकार। रथादिकल्पनार्थमाज्ञप्तैर्देवैः कल्पितं रथमारूढः सिद्धादिभिः स्तुतः शिवः कः सारथिर्भवेदित्याद्याह। देवैः प्रार्थितेन ब्रह्मणा सारथ्येऽङ्गीकृते महादेवो रथमारुह्य देवानाश्वास्य त्रिपुरवधार्थं निर्जगाम। गवादीनां खुरद्वैधीभावेऽश्वानां स्तनाभावे च कारणं कथयित्वा त्रिपुरवधप्रकारं चाभिधाय प्रकृतिमापन्नानां देवानां स्वस्थानगमनमभ्यधाद्दुर्योधनः। शिवस्य सारथ्यं यथा ब्रह्मणा कृतं तथा त्वमपि कर्णस्य सारथ्यं कुर्वित्युक्त्वा पुनर्दुर्यो-

दृष्ट्वा आगतैर्युधिष्ठिरादिभिः सह स युयुधे । भीमे कौरवसेनां नाशयति ते सर्वे निरुत्साहा बभूवुः । कर्णपराक्रमदर्शनानन्तरमर्जुनप्रेरितेन श्रीकृष्णेन रथे प्रेषिते सेनां नाशयन्तं तं प्रति दुर्योधनः संशप्तकान्प्रेषयामास । अर्जुनः संशप्तकैर्युद्धं कुर्वंस्तेषां दशसहस्रान्पार्थिवान्हत्वा यावत्काम्बोजबलं नाशयाति तावदश्वत्थामा आजगाम । अर्जुनकृष्णयोर्बाणैराच्छादितयोरर्जुनस्य शैथिल्यं दृष्ट्वा श्रीकृष्णेन सक्रोधमुक्तः स द्रौणिं धनुरादिच्छेदनपूर्वकं विसंज्ञं चकार, ततस्तं च तत्सारथिरपोवाह । प्रहारैर्गाढं व्यथितो युधिष्ठिरः क्रोशमात्रमपक्रम्य तस्थौ ... ५१

५७ दुर्योधनवाक्याद्धृष्टेषु योधेषु तत्समक्षमश्वत्थामा धृष्टद्युम्नं नाशयितुं प्रतिजज्ञे ... ... ५३

५८ द्रवन्तीं सेनां दृष्ट्वा 'न च पश्यामि दाशार्ह धर्मराजम्' इत्याद्युक्तवतोऽर्जुनस्य प्रेरणया श्रीकृष्णो युधिष्ठिरसमीपगमनार्थं रथं प्रेषयति स्म । युधिष्ठिरादीन् दृष्ट्वाऽर्जुनं प्रत्याह श्रीकृष्णः ५४

५९ कुरुसृञ्जयादीनां संकुलयुद्धे प्रवृत्ते धृष्टद्युम्नसात्यक्योः कर्णेन सह युद्ध्यमानयोरागतस्य क्रुद्धस्याश्वत्थाम्नो धृष्टद्युम्नस्य चोक्तिप्रत्युक्ती । श्रीकृष्णप्रेरणया धृष्टद्युम्नं रक्षितुं बाणान्वर्षन्तमर्जुनं प्रत्यश्वत्थाम्न आगमनम् । अर्जुनाश्वत्थाम्नोर्युद्ध्यमानयोरर्जुनबाणप्रहारेण मुग्धं द्रौणिं गृहीत्वा तत्सारथिरपययौ ... ... ५५

६० श्रीकृष्णोऽर्जुनं प्रति युधिष्ठिरनाशार्थं दुर्योधनादीनां चेष्टादिकमभिधाय कर्णकृतपाण्डवसेनानाशादिकथनपूर्वकं कर्णेन सह युद्धं कर्तुं प्रेरयति स्म । भीमेन कृतं धार्तराष्ट्रसेना विद्रावणादिकं गजादीनां नाशादिकं च कथयति श्रीकृष्णेऽर्जुनोऽपि भीमस्य तत्कर्म दृष्ट्वा शत्रुसेनां नाशयितुं प्रववृते ... ... ५६

६१ मदीये सैन्ये द्रवति कुरवः किमकुर्वन्निति धृतराष्ट्रप्रश्ने भीमं प्रति कर्णस्यागमनादिकं शशंस सञ्जयः । कर्णादीन्प्रति शिखण्डिप्रभृतिष्वागतेषु कर्णशिखण्डिनोर्धृष्टद्युम्नदुःशासनयोश्च युद्धे प्रवृत्ते धृष्टद्युम्नरक्षणार्थं पञ्चालानां गमनादि । नकुलवृषसेनयोर्युद्धं तथा सहदेवोलूकयोर्युद्ध्यमानयोः सहदेवकृतमुलूकस्याश्वनाशनं च । सात्यकिशकुन्योर्युद्ध्यमानयोः सात्यकिना विरथीकृतः शकुनिरपयानं चक्रे । भीमदुर्योधनयोर्युद्ध्यमानयोर्भीमेन विरथीकृतो दुर्योधनस्तत्समीपादपययौ । युधामन्युकृपयोर्युद्ध्यमानयोः कृपेण हतसूतो युधामन्युरपायात् । हार्दिक्योत्तमौजसोर्युद्धे प्रवृत्ते हार्दिक्येन मूर्छां प्रापितमुत्तमौजसं तत्सारथिरपवाहयामास । दुर्योधनं विजित्य गजानीकं निघ्नति भीमे तद्भयाद्गजानां पलायनादि ... ५७

६२ अर्जुनगमनानन्तरमुभयसेनयोः संकुले युद्धे प्रवृत्ते सहदेवास्त्रविद्धं दुर्योधनं दृष्टवतः कर्णस्यास्त्रत्यागादि । कर्णयुधिष्ठिरयोर्युद्धं कुर्वतोः कर्णेनोरसि विद्धे युधिष्ठिरे सूतं प्रति याहीत्युक्तवति पञ्चालादय आगत्य धार्तराष्ट्रान्निवारयामासुः ... ५८

६३ केकेयैः सह युद्धं कुर्वन्कर्णस्तेषां पञ्चशतं वीरान्हत्वैकरथेन युधिष्ठिरं प्रत्याजगाम । कर्णबाणेन विरथौ युधिष्ठिरनकुलौ

सहदेवरथारूढौ दृष्टवतः कृपा
विष्टस्य शल्यस्य कर्णं प्रति वच-
नम्। अर्जुनेन युद्धं कर्तुं तथा
भीमग्रस्तं दुर्योधनं मोचयितुं
शल्येन प्रेरिते कर्णे भीमं प्रति
गते युधिष्ठिरो जवनैरश्वैः सह-
देवेन सहापायात् । भीमसाहा-
य्यार्थं युधिष्ठिरेण प्रेरितौ नकुल-
सहदेवौ भीमं प्रति जग्मतुः..५९

६४ आगतेनाश्वत्थाम्ना युद्धं कुर्व-
न्नर्जुनस्तस्याश्वान् हत्वा कौरव-
बलं नाशयति स्म। पुनरागतोऽ-
श्वत्थामाऽर्जुनेन हतसूतोऽपि स्व-
यमेव रश्मीन् गृहीत्वा यदा युयुधे
तदाऽर्जुनोऽपि रश्मींश्छित्वा तम-
पीडयत्। पाण्डवभयात्सैन्यं प-
लायमानं दृष्टवतो दुर्योधनस्य
वाक्यं श्रुत्वा कर्णः शल्यं प्रति स्व-
पराक्रमप्रशंसावाक्यमुक्त्वा भार्ग-
वास्त्रेण पञ्चालान्नाशयामास ६०

६५ भार्गवास्त्रभीतं स्वबलं दृष्टवता
श्रीकृष्णेन बोधितोऽर्जुनो युधि-
ष्ठिरं द्रष्टुं निर्गतः स्वसैन्यमव-
लोकयन्भीममागत्य ‘अपयात
इतो राजा धर्मपुत्रो युधिष्ठिरः।
कर्णबाणाभितप्ताङ्गो यदि जीवे-
त्कथञ्चन’ इति तद्वाक्यं श्रुत्वा
युधिष्ठिरं प्रति गन्तुं श्रीकृष्णं
प्रेरयामास । एवमर्जुनप्रेरितः
श्रीकृष्णो युधिष्ठिरं प्रति जगाम।
स्वपादवन्दनं कुर्वतोः कृष्णार्जु-
नयोः कर्णं हतं मत्वा तावभ्य-
नन्दद्युधिष्ठिरः ... ... ६१

६६ युधिष्ठिरो ‘हतः कर्ण’ इत्याद्युक्त्वा
कर्णपराक्रमं वर्णयन् ‘स कथं
हतस्त्वया’ इत्यादि पृष्ट्वा चिन्ता-
क्रान्तः कर्णकृतपराजयप्रयुक्तं
खेदमुद्भाव्य कर्णमरणं निश्चित्य
कर्णप्रतिज्ञाकथनपूर्वकं पुनः ‘स
कथं त्वया हतः’ इत्याद्युवाच ६२

६७ युधिष्ठिरवाक्यं श्रुत्वाऽर्जुनो-
ऽश्वत्थाम्ना सह कृतं युद्धं कर्णा-
दीनां पराक्रमं च कथयन्कर्णं
हन्तुं प्रतिजज्ञे ... ... ... ६३

६८ जीवन्तं कर्णं श्रुत्वा क्रुद्धो
युधिष्ठिरोऽर्जुनं तिरस्कुर्वंस्तज्ज-
न्मकालभवामाकाशवाणीमनूद्य
धिक् ते गाण्डीवादिकमित्यु—
वाच ... ... ... ... ६३

६९ युधिष्ठिरवाक्यं श्रुत्वा तं
हन्तुमसिं गृह्णन्तमर्जुनं दृष्ट्वा तं
प्रति श्रीकृष्णः ‘इदानीं पार्थ
जानामि न वृद्धाः सेवितास्त्व-
या’ इत्याद्युवाच। अन्यस्मै दे-
हि गाण्डीवमित्यादिना स्वव्रतं
कथयन्तमर्जुनं धिक्कृत्य तस्मै धर्म-
रहस्यं कथयञ्श्रीकृष्णः सत्या-
नृताभ्यां पुण्यपापविषये बला-
कोपाख्यानं कौशिकोपाख्यानं
चाकथयत्। धर्मपदार्थमुपदिशन्तं
श्रीकृष्णं प्रशंसन्नर्जुनो ‘मम व्रतं
जानासि’ इत्याद्युवाच। अर्जुन-
प्रतिज्ञारक्षणार्थमुपायं ब्रुवञ्श्री-
कृष्णो ‘मानार्हं प्रति त्वमि-
त्युक्ते तस्य मरणम्’ इत्याद्युपदि-
देश ... ... ... ... ६४

७० श्रीकृष्णवाक्यं प्रशस्य युधि-
ष्ठिरं भर्त्सयन्भीमं च प्रशंसन्
पुनः परुषवाक्यानि श्रावयित्वा
ऽनुतप्तोऽर्जुनः पुनरसिं जग्राह।
किमिदमित्यादिकृष्णप्रश्नानन्तरम्
‘अहं हनिष्ये स्वशरीरमेव’ इत्या-
द्युक्तवन्तमर्जुनं प्रति जीवतोऽ-
प्यात्मवधोपायं कथयञ्श्रीकृष्ण
आत्मप्रशंसां कुरु इत्याद्याह।
कृष्णोपदेशेनात्मश्लाघां कृत्वा
कर्णवधं प्रतिज्ञाय शस्त्राणि परि-
त्यज्य प्राञ्जलिः सन् युधिष्ठिरं
प्रति प्रसीद राजन्नित्याद्युवाच।
अर्जुनं प्रति सखेदवाक्यान्युक्त्वा
वनाय गन्तुमुद्यन्तं युधिष्ठिरं
प्रति श्रीकृष्णः प्रणामपूर्वकं वि-
नयवाक्यान्युक्त्वा कर्णवधार्थं
प्रतिजज्ञे । युधिष्ठिरः प्रणतं

कृष्णमुत्थाप्यानुनयवाक्यान्य—
ब्रवीत् ... ... ... ६६

७१ श्रीकृष्णोपदेशात्पादौ गृहीत्वा प्रसीदेत्यादि वदन्नर्जुनो युधिष्ठिरेणोत्थापनालिङ्गनपूर्वकमनुनीतस्तत्समीपे पुनः कर्णवधं प्रतिजज्ञे। श्रीकृष्णवाक्यात्पुनः पादग्रहणादि कुर्वन्तमर्जुनमुत्थाप्य युधिष्ठिरो युद्धार्थमनुज्ञां दत्वाऽऽशिषस्तस्मै ददौ ... ६७

७२ रथसज्जीकरणार्थं प्रेरितेन श्रीकृष्णेन सज्जीकृते रथ आरुह्य गच्छन्नर्जुनः स्वशरीरे स्वेदं दृष्ट्वा चिन्तयामास। चिन्तयन्तमर्जुनं प्रशस्य कर्णमपि प्रशंसन्नेवंविधमप्येनं जहीत्युवाच ... ... ६८

७३ पुनरर्जुनं प्रति वदञ्श्रीकृष्णो भीष्मयुद्धादिकमनूद्य तं प्रशंसन्कर्णनिन्दां विधाय पुनरभिमन्युवधार्थमुपदिश्य कर्णार्णवात्पञ्चालानुद्धरेत्याद्याह स्म ६८

७४ कृष्णवाक्येन विशोको हृष्टश्चार्जुनः कर्णवधं प्रतिज्ञाय सक्रोधवाक्यान्युक्त्वाऽऽत्मानं श्लाघयन्भीमं मुमोचयिषुः कर्णशिरो जिहीर्षुश्च प्रययौ ... ७१

७५ कर्णयुद्धश्रवणार्थं धृतराष्ट्रप्रश्ने सञ्जयः पाण्डवसेनासमृद्धिं वर्णयित्वा संकुलं युद्धं वर्णया—
मास ... ... ... ... ७२

७६ कौरवबलैर्युद्धं कुर्वन्भीमः सारथिं प्रति स्वस्य स्वपरज्ञानाभावं कथयित्वा युधिष्ठिरार्जुनयोरदर्शनप्रयुक्तं दुःखं प्रकाशयन्युद्धसामग्रीशेषं च पप्रच्छ। विशोकाख्यसारथिभीमयोः संवादः ... ... ... ... ७२

७७ रथप्रेषणार्थमर्जुनेन प्रेरितः श्रीकृष्णो यत्र भीमस्तत्र गच्छामीत्युवाच। कुरुसैन्यमध्ये प्रविश्य युद्धं कुर्वतोऽर्जुनस्य भयात्कौरवसैन्ये पलायिते स सूतानीकं प्रति जगाम। अर्जुनागमनं श्रुत्वा कौरवसैन्यं मर्दयति भीमे तं प्रति दुर्योधनप्रेरितानि सैन्यान्याववुः। भीमनाशितसैन्यसंख्यां कथयन्सञ्जयस्तत्कृतां शोणितनदीं वर्णयामास। भीमस्य कर्म दृष्ट्वा दुर्योधनेन प्रेरितः शकुनिस्तेन सह युद्धं कुर्वंस्तद्बाणेन मूर्छितो धृतराष्ट्रपुत्रेणापवाहितः। तस्मिन्निर्जिते दुर्योधनोऽप्यपयानं चक्रे, तं दृष्ट्वा कुरुसैन्यमपि व्यद्रवत् ... ... ... ... ७३

७८ भग्नेषु सैन्येषु दुर्योधनादयः किमब्रुवन्निति धृतराष्ट्रप्रश्ने सञ्जयस्योत्तरम्। सोमकैः सह युद्धं कुर्वन्कर्णः पञ्चालान्प्रति गन्तुं शल्यं संप्रेर्य रथध्वनिना सर्वान् संत्रास्य पाण्डवसैन्यं नाशयति स्म। आगताञ्शिखण्डिसात्यकिप्रभृतीन् विमुखीकृत्य पञ्चालादिभिर्युद्ध्यमानस्य कर्णस्य पराक्रमं देवादयः प्रशशंसुः। पाण्डवसेनाभङ्गं दृष्टवतां दुर्योधनादीनां हर्षं तत्कृतपाण्डवसैन्यनाशनं च कथयति स्म सञ्जयः ... ७४

७९ सञ्जयो रणेऽर्जुनप्रवर्तितां शोणितनदीमवर्णयत्। कर्णस्य रथकेतुं दृष्ट्वा श्रीकृष्णं प्रति 'एष केतू रणे पार्थ' इत्याद्युवाचार्जुनः। कर्णसमीपगमनार्थं कृष्णप्रेरितरथोऽर्जुनः कौरवसेनां निर्जयन्नभ्ययात्। अर्जुनरथकेतुं दृष्ट्वा शल्यः कर्णं प्रति 'अयं सरथ आयाति' इत्याद्युक्त्वाऽर्जुनं प्रति गन्तुं प्रशंसापूर्वकं तं प्रति प्रोत्साहयामास। आत्मश्लाघां कुर्वन्कर्णोऽर्जुनस्याजेयत्वविषयकं शल्यवाक्यं श्रुत्वा खाण्डवदाहाद्यनुवादपूर्वकमर्जुनं कृष्णं च प्रशस्य 'एतौ च हत्वा' इत्याद्युवाच। अर्जुनः कर्णप्रेरणया वारयितुमागतैः कौरवैः सह युद्धं

कुर्वन्नश्वत्थामप्रभृतिभिः संकुलं युद्धं चकार। शिखण्डिप्रभृतयश्च युयुधिरे ... ... ७६

८० सैन्यसागरमध्यस्थं भीमसुज्जिहीर्षुणाऽर्जुनेन कृतं सैन्यनाशादिकं हतसैन्यादिभिर्युद्धभूमिशोभादिकं च कथयति स्म सञ्जयः। कुरुषु भग्नेष्वर्जुनो भीमेन सह संमन्त्र्य तदनुज्ञां गृहीत्वाऽग्रे जगाम ... ... ... ७८

८१ आवरीतुमागतान्संशप्तकान्नवतिवीरान्निहत्यार्जुनो गजयोधिभिर्म्लेच्छैः सह युयुधे। अर्जुनसाहाय्यार्थमागतो भीमो गदया कौरवसैन्यं नाशयन्गजानीकं जघान। अर्जुनबाणपीडितानार्तनादं कृत्वा पलायमानान्कौरवानाश्वास्य कर्णः पञ्चालाञ्जगाम ... ... ... ७८

८२ पञ्चालादिभिर्युद्धं कुर्वतः कर्णस्य पुत्रे प्रसेने सात्यकिना हते क्रुद्धः स धृष्टद्युम्नपुत्रं जघान। धृष्टद्युम्नपुत्रं हतं दृष्ट्वा श्रीकृष्णं प्रेरयन्नर्जुनः कर्णसमीपं जगाम, तमनु भीमसेनोऽपि। उत्तमौजःप्रभृतिभिः कर्णस्य कृपादिभिः सात्यकेर्दुःशासनेन भीमस्य च युद्धम् ... ... ... ७९

८३ सञ्जयकृतं दुःशासनभीमयोर्युद्धवर्णनम्। दुःशासनेन प्रेषितां शक्तिं निहन्तुं भीमेन प्रेषिता गदा तच्छक्तिं भङ्क्त्वा तं मूर्ध्नि ताडयामास। पुनर्भीमप्रेषितया गदया ताडितो दुःशासनो विह्वलः सन्भूमौ पपात। पतितं दुःशासनं दृष्ट्वा पञ्चालादिषु सिंहवन्नदत्सु भीमो रथादवप्लुत्य, द्रौपदीकेशग्रहणादिकं स्मृत्वा क्रुद्धः सन् कर्णादीनाह्वयन् 'निहन्मि दुःशासनमद्य' इत्याद्युवाच। भीमो दुःशासनं प्रत्याक्षेपवाक्यान्युक्त्वा तद्वक्षः पाटयित्वा पूर्वप्रतिज्ञातं तद्रुधिरपानमकरोत्। गतासुं दुःशासनं प्रति क्रोधवाक्यानि ब्रुवन्तं भीमं राक्षसं मत्वा कौरवसैन्यानि पलायनं चक्रुः। भीमो दुःशासनं हत्वा प्रमाणकोट्यां कालकूटभक्षणादिकमनूद्य कौरवानधिक्षिप्य कृष्णार्जुनसमीपे पूर्वसभायां कृतायाः प्रतिज्ञायाः सत्यत्वं कथयामास. ८०

८४ आवृण्वानान्निषङ्गिप्रभृतीन्दश धृतराष्ट्रपुत्रानवधीद्भीमः। भीमपराक्रमं दृष्ट्वा भीतं कर्णं प्रत्युपदिशतः शल्यस्य वाक्यं श्रुत्वा क्रुद्धो वृषसेनो युद्धार्थं भीमं प्रति जगाम। नकुलवृषसेनयोर्युद्ध्यमानयोर्विरथे नकुले भीमरथारूढे उभाभ्यां सह वृषसेनस्य युद्धम्। वृषसेनेन युद्धं कर्तुमर्जुनं प्रति भीमस्योक्तिः ... ... ८१

८५ उभयसैन्ययोस्तुमुले युद्धे प्रवृत्तेऽर्जुनादीन्वृषसेने बाणान्वर्षति पीडितान्नकुलादीन्दृष्ट्वा धावताऽर्जुनेन सह तस्य युद्धम्। क्रुद्धोऽर्जुनो दुर्योधनादिसहितं कर्णं प्रति "भवत्समक्षमेनं हनिष्यामि" इत्याद्युक्त्वा कर्णादिषु पश्यत्सु वृषसेनं जघान। पुत्रवधं दृष्ट्वाऽभितप्तः कर्णः कृष्णार्जुनौ प्रत्यधावत् ... ८२

८६ आगच्छन्तं कर्णं दृष्ट्वा श्रीकृष्णोऽर्जुनं प्रति 'अयं सरथ आयाति' इत्याद्युक्त्वा कर्णेन सह युद्धं कर्तुं तं प्रशशंस। कर्णस्य वधं प्रतिज्ञाय तं प्रति गन्तुमर्जुनेन प्रेरितः कृष्णो हयान्संचोद्य क्षणेन तत्समीपमाजगाम.. ८३

८७ पुत्रवधाभितप्तः कर्णोऽर्जुनमाहूय तदभिमुखं ययावित्याह सञ्जयः। कर्णार्जुनसमागमं दृष्ट्वा सैन्यानां विस्मयादिकमुभयसैन्ययोर्वाद्यवादनं कर्णार्जुनयो रूपं पराक्रममुभयोः साहाय्यार्थ-

मुभयसैन्ययोरागमनं चाह सञ्जयः । कर्णार्जुनसमागमदर्शनार्थमागतानां देवादीनां पक्षप्रतिपक्षभावे सतीन्द्रसूर्ययोर्विवादः। उभयोः समागमे त्रिलोक्याः कम्पादिकं दृष्ट्वा देवेषूभयोर्जयसाम्यार्थं ब्रह्माणं प्रति प्रार्थयत्सु सत्स्विन्द्रेणार्जुनजये प्रार्थिते ब्रह्मेशानावर्जुनस्य विजयध्रौव्यमभिधाय कृष्णार्जुनौ प्रशशंसतुः । इन्द्रवाक्यश्रवणेन सर्वभूतानां विस्मयादिकं, कर्णार्जुनध्वजवर्णनपूर्वकं मिथो युद्धं चाभ्यधात्सञ्जयः। कर्णेन, मयि हते त्वं किं करिष्यसीति पृष्टः शल्यः कृष्णार्जुनवधं प्रतिजज्ञे । एवमेवार्जुनेन श्रीकृष्णः पृष्टः। ततः 'पतेद्दिवाकरः स्थानात्' इत्यादिवाक्यं वदति श्रीकृष्णेऽर्जुन आत्मानं श्लाघयामास ... ८३

८८ युद्धदर्शनार्थं देवनागासुरादिष्वागतेषूभयसैन्ययोर्वादित्रादीनि वादयतोः कर्णार्जुनौ स्वस्वास्त्रैर्दिगादिकं प्रावृणुताम् । बाणान्वर्षतां दुर्योधनादीनां धनुरादिष्वर्जुनेन छिन्नेष्वश्वत्थामा दुर्योधनं प्रति पाण्डवैः शमं कुर्वित्युवाच । दुर्योधनोऽश्वत्थामवाक्यमङ्गीकृत्य कर्णं प्रशंसन्सैन्यमादिदेश ... ... ८५

८९ सञ्जयः कर्णार्जुनयोः समागमं, तत्काले तयो रूपादिकमुभयपक्षपातिनां वाक्यानि, तयोर्युद्धारंभं च कथयामास । पञ्चालादिभिर्युद्धं कुर्वतः कर्णस्य पराक्रमं दृष्ट्वा पूर्वं सभायामुक्तं कर्णवाक्यं स्मृत्वा भीमे 'एनं जहि' इत्युक्तवति श्रीकृष्णोऽपि तथैवाब्रवीत्। अर्जुनेन श्रीकृष्णमामन्त्र्य प्रयुक्ते ब्रह्मास्त्रे कर्णेन निवारिते सति क्रुद्धेन भीमेन प्रेरितोऽर्जुनस्तेन सह तुमुलं युद्धमकरोत् । अर्जुनबाणपीडितेषु कौरवेष्वर्जुनं हन्तुं प्रेरयत्सूभयोः परस्परं प्रति बाणान्वर्षतोः सतोरर्जुनास्त्रभयात्कर्णं त्यक्त्वा कौरवाः पलायनं चक्रुः ... ... ८६

९० सञ्जयः कौरवप्रयाणमुभयोर्मध्ये क्वचित्कस्यचिदाधिक्यमाकाशस्थितैः कृतमुभयोः प्रशंसनं चाचकथत्। अर्जुनेन कृतवैरोऽश्वसेननामा नागः पातालादागत्य कर्णेनाज्ञातस्तत्तूणीरे तस्थौ। शराभितप्तः कर्णोऽर्जुनवधार्थं बहुदिनपर्यन्तं पूजितं सर्पमुखमश्वसेनेन कृतप्रवेशं बाणं धनुषि संदधे । कर्णस्य धनुषि प्रविष्टं नागं दृष्ट्वा देवादिषु हाहाकारं कुर्वत्सु 'हतोऽसि फाल्गुन' इत्युक्त्वा तं बाणं मुमोच कर्णः। कर्णसन्धितं बाणं दृष्ट्वा पूर्वमेव श्रीकृष्णेन पृथिव्यां रथे मज्जिते सति स बाणोऽर्जुनस्य किरीटं चिच्छेद । पुनरागतोऽश्वसेनस्तूर्णं प्रविशन्कर्णेन प्रत्याख्यातः स्वयमेव घोरं रूपं कृत्वार्जुनं हन्तुं प्रययौ। आगच्छन्तं नागं दृष्ट्वा तन्नाशं कर्तुमादिशता कृष्णेन तत्प्रत्यभिज्ञायां दत्तायामश्वसेनं नाशयति स्मार्जुनः। कर्णार्जुनयोः परस्परं बाणान्वर्षतोर्बाणप्रहारेण मोहितं कर्णं प्रति बाणांस्त्यक्तुमनिच्छन्नप्यर्जुनः श्रीकृष्णवाक्यात्पुनर्बाणान्ववर्ष। धैर्यं धृत्वा बाणान्वर्षतः कर्णस्य भार्गवशापादस्त्रविस्मरणमभूद्ब्राह्मणशापाद्रथचक्रं च भूमौ ममज्ज। पुनरर्जुने बाणान्वर्षति चक्रमुद्दिधीर्षुः कर्णो युद्धधर्मं कथयन्मुहूर्तं प्रतिपालयेति तमुवाच ... ... ... ... ८८

९१ श्रीकृष्णः परुषवाक्यानि वद-

न्यदा द्रौपदीवस्त्रहरणाद्यनूद्य 'क्व ते धर्मस्तदा गतः' इत्याद्युक्तवांस्तदा सलज्जः कर्णो निरुत्तरो बभूव। त्वरां कर्तुं श्रीकृष्णे प्रेरयति पुनरुभयोर्युद्धे प्रवृत्ते मोहितमर्जुनं दृष्ट्वा चक्रोद्धारणार्थं यत्नं कुर्वति कर्णे लब्धसंज्ञोऽर्जुनस्तस्य रथध्वजं चिच्छेद। कर्णवधार्थमर्जुनेन धनुषि संहतस्य शरस्य प्रभामर्जुनशपथं चाकथयंस्तेन कृतं कर्णशिरश्छेदनं, पाण्डवानां शङ्खादि—वादनं, छिन्नमस्तकस्य कर्ण—शरीरस्य शोभां चाभ्यधात्सञ्जयः। कर्णे हते शल्ये च प्रतिनिवृत्ते कौरवाः पलायनं चक्रुः .. ६१

९२ सञ्जयः शल्यस्य गमनं दुर्योधनादीनां शोकादिकं भीमादीनां नादेन रोदस्योः कम्पनं दुःखितदुर्योधननिकटे शल्य—वाक्यं च कथयति स्म .. ६२

९३ कर्णार्जुनयुद्धे कुरुसृञ्जयानां रूपं कीदृगिति धृतराष्ट्रप्रश्ने सञ्जयः कुरुपाण्डवयोर्बलक्षयं कथयति स्म। कर्णे हते कौरवबले पलायमाने शोकाकुलो दुर्योधनः शल्यं प्रति प्रागल्भ्यगर्भं वाक्यमुवाच। भीमो गदायुद्धं कुर्वन्गदया पञ्चविंशतिसहस्रं सैनिकाञ्जघान। आगान्तमर्जुनं दृष्ट्वा कौरवेषु पलायमानेषु संकुलयुद्धे च प्रवृत्ते स्वसैन्यं भज्यमानं दृष्ट्वा पाण्डवैः सह युद्ध्यमानो दुर्योधनो योधान्प्रत्युवाच ... ... ... ... ६३

९४ दुर्योधनेन परावर्त्यमानं सैन्यं दृष्ट्वा शल्यस्तं प्रति वदन्बलक्षयादिकं कथयित्वा हतैर्नरादिभिरगम्यरूपां पृथ्वीं वर्णयित्वा युद्धावहारं कुर्वित्याह। द्रौणिप्रभृतिभिर्दुर्योधनस्याश्वासने कृतेऽर्जुनभीतानां कौरवाणां शिविरगमनादि। सञ्जयो मृतस्य कर्णस्य शरीरप्रभां कथयित्वा तं प्रशंसन् नद्यादीनां प्रस्रवणाभावादिकं कृष्णार्जुनयोः शङ्खध्वनिं तयो रूपं च वर्णयामास ... ... ... ... ६४

९५ अर्जुनभयात्कौरवसैन्येषु पलायमानेषु तद्दिवसीययुद्धावहारे कृते कृपवर्मादयः स्वस्वशिबिराणि जग्मुः ... ६५

९६ हृष्टः श्रीकृष्णोऽर्जुनं प्रति 'हतो वज्रभृता वृत्रस्त्वया कर्णो धनञ्जय' इत्याद्युक्त्वा सैनिकान्प्रति च 'परानभिमुखा यत्नास्तिष्ठध्वम्' इत्याद्युक्त्वा युधिष्ठिरं प्रति गत्वा अर्जुनेन सह तत्पादवन्दनं कृत्वा च कर्णवधादिवृत्तान्तं कथयति स्म। हृष्टो युधिष्ठिरः श्रीकृष्णं प्रति 'त्वया सारथिना पार्थो यत्नवानाहनश्च तम्' इत्याद्युक्त्वा कृष्णार्जुनौ स्तुत्वा च युद्धभूमिदर्शनार्थं जगाम। रणे शयानं कर्णं दृष्ट्वा श्रीकृष्णं प्रति 'अद्य राजाऽस्मि गोविन्द' इत्याद्युवाच युधिष्ठिरः। हृष्टा नकुलादयः कृष्णार्जुनौ स्तुत्वा स्वस्वशिबिराणि जग्मुः। जनमेजयं प्रति वैशम्पायनः कर्णनिधनप्रयुक्तं धृतराष्ट्रविलापादिकं, कर्णार्जुनयुद्धश्रवणफलं, कर्णपर्वश्रवणफलं च कथयामास ... ६५

॥ समाप्तेयं कर्णपर्वविषयानुक्रमणिका ॥

॥ श्रीगणेशायनमः ॥ ॥ नरनारायणौनत्वाप्राचीनाचार्यवर्त्मना ॥ कर्णपर्वार्थविद्योतीभावदीपोवितन्यते ॥ १ ॥ ननुविराटादिपर्वचतुष्टयतात्पर्यक्रमेणार्थलुब्धानामर्थःसेवयानीत्याकपटपूर्वकेणकुलवृद्धवधेन नृशंसानृतपूर्वकेणमहागुरुवधेनचसिध्यतीत्युक्तं तावतैवार्थनिरूपणंसमाप्तं । अतःपरंकाममोक्षावेवनिरूपणीयाविति कर्णपर्वादित्रयंनारंभणीयमितिचेत्सत्यं । यथाधर्मार्थौनिरूपितौएवंधर्माभासोऽर्थाभासश्चनिरूपणीयःपरिहाराय । एवमधर्मानर्थौअधर्माभासानर्थाभासौचनिरूपणीयौहानायोपादानायच तदर्थमुत्तरग्रंथःकाममोक्षयोःप्रागावश्यकः । तत्रचोरेभ्यःकार्पटिकमार्गमुपदिशतःसत्यवादिनःसत्यवदनंधर्माभासएवमभिचार्यघ्राणचक्षुर्षराक्षसंघ्नतोव्याधस्यहिंस्रत्वमधर्माभासः । तथाशोकहेतुनाकुलक्षयेणप्राप्तोऽर्थोऽर्थाभासः । सुप्तानांहननमधर्मः । तत्कृतोऽश्वत्थाम्नोऽभिभवोऽनर्थः। शरणागतस्वसैनिकत्राणार्थमन्यायेनापिकृ

॥ श्रीकृष्णायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ वैशम्पायनउवाच ॥ ततोद्रोणेहतेराजन्दुर्योधनमुखान्नृपाः ॥ भृशमुद्विग्नमनसोद्रोणपुत्रमुपागमन् १ तेद्रोणमनुशोचन्तःकश्मलाभिहतौजसः ॥ पर्युपासन्तशोकार्तास्ततःशारद्वतीसुतम् २ तेमुहूर्तंसमाश्वस्यहेतुभिःशास्त्रसंमितैः॥ रात्र्यागमेमहीपालाःस्वानिवेश्मानिभेजिरे ३ तेवेश्मस्वपिकौरव्यपृथ्वीशानाप्नुवन्सुखम् ॥ चिन्तयन्तःक्षयंतीव्रंदुःखशोकसमन्विताः ४ विशेषतःसूतपुत्रोराजाचैवसुयोधनः ॥ दुःशासनश्चशकुनिःसौबलश्चमहाबलः ५ उषितास्तेनिशांतांतुदुर्योधननिवेशने ॥ चिन्तयन्तःपरिक्लेशान्पांडवानांमहात्मनाम् ६ यत्तद्द्यूतेपरिक्लिष्टाकृष्णाचानायितासभाम् ॥ तत्स्मरन्तोऽनुशोचन्तोभृशमुद्विग्नचेतसः ७ तथातुसंचिन्तयतांतान्क्लेशान्द्यूतकारितान् ॥ दुःखेनक्षणदाराजन्जगामाब्दशतोपमा ८ ततःप्रभातेविमलेस्थितादिष्टस्यशासने ॥ चक्रुरावश्यकंसर्वेविधिदृष्टेनकर्मणा ९ तेकृत्वाऽवश्यकार्याणिसमाश्वस्यचभारत ॥ योगमाज्ञापयामासुर्युद्धायचविनिर्ययुः १० कर्णंसेनापतिंकृत्वाकृतकौतुकमंगलाः॥ पूजयित्वाद्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ११ गोभिरश्वैश्चनिष्कैश्चवासोभिश्चमहाधनैः॥ वंद्यमानाजयाशीर्भिःसूतमागधबंदिभिः १२ तथैवपांडवाराजन्कृतपूर्वाह्णिकक्रियाः ॥ शिबिरान्निर्ययुस्तूर्णंयुद्धायकृतनिश्चयाः १३ ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणम् ॥ कुरूणांपांडवानांचपरस्परजयैषिणाम् १४ तयोर्द्वौदिवसौयुद्धंकुरुपांडवसेनयोः ॥ कर्णेसेनापतौराजन्बभूवाद्भुतदर्शनम् १५ ततःशत्रुक्षयंकृत्वासुमहांतंरणेवृषः ॥ पश्यतांधार्त्तराष्ट्राणांफाल्गुनेननिपातितः १६ ततस्तुसंजयःसर्वंगत्वानागपुरंद्रुतम् ॥ आचष्टधृतराष्ट्राययद्वृत्तंकुरुजांगले १७ ॥ जनमेजयउवाच ॥ आपगेयंहतंश्रुत्वाद्रोणंचापिमहारथम् ॥ आजगामपरामार्तिंवृद्धोराजाऽम्बिकासुतः १८

तोब्रह्मवधोनइतरब्रह्मवधवदनर्थोऽपित्वनर्थाभासएव नचतेनब्रह्महाभवेदित्याततायिवधेदोषाभावस्मरणात् । इत्येषामर्थानांनिरूपणार्थउत्तरःसंदर्भः । आख्यायिकातुसुखप्रतिपत्त्यर्था । तस्मादिदमपिपर्वत्रयमावश्यकमेव । ततोद्रोणेहतेराजन्निति १ कश्मलाभिहतौजसः तीव्रशोकाभिघातजव्यामोहेननिरस्तसामर्थ्याः शारद्वतीसुतंद्रौणिम् २ समाश्वस्यसावधानाभूत्वा रात्र्यागमेप्रदोषकाले ३ पृथ्वीशाराजानः क्षयंभूतंभाविनंचचिन्तयन्तःपरामृशन्तः ४ । ५ । ६ । ७ क्लेशान्कचग्रहणादीन् । क्षणदारात्रिः ८ आवश्यकंनित्यकृत्यम् ९ योगंसंनहनम् १० । ११ निष्कैः सुवर्णहारैः । महाधनैर्बहुमूल्यैः । वंद्यमानाः स्तूयमानाः । सूतावंशानुक्रमविदः । मागधाः पाणिस्वनिकाः । बंदिनः स्तुतिपाठकाः १२ । १३ । १४ । १५ वृषःकर्णः पश्यतांअनादरेषष्ठी १६ । १७ । १८

